उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥"

(अङ्क० ६. श्लो० २)

इति । स **शाकुन्तले** यथा—

"कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।
अथवा,
अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥"

(अङ्क० ६. श्लो० १३)

इति । अत्रोन्मादः पूर्वार्धगम्यः पाश्चात्त्येन प्रबोधेनोपमर्दितः । घोषवत्युपालम्भवाक्ये तून्मादस्य परिपोषमात्रमिति भेदः ।

यद्यपि **शाकुन्तले** दुर्वासश्शापघटना, मारीचद्वारिका नायकयोः पुनस्समागमघटना **चाविमारक**स्यानुकरोति, दीर्घतपश्शापस्य नारदद्वारकस्य नायकपुनस्समागमस्य च तत्र दर्शनात् । तथा**भिषेकनाटक - बालचरित**च्छायानुकरणमपि **शाकुन्तले**ऽस्ति* । तथापि **स्वप्नप्रतिमा**गतैरेव वस्तुभिर्भूयिष्ठैः **शाकुन्तलं** भूषितमिति नूनमतिदूरमाकृष्टमनयोः कामनीयकेन हृदयं **कालिदासस्य** । न केवलं नाटकेऽनयोश्छाया **कालिदासेन** निवेशिता, किन्तु श्रव्यकाव्येऽपि । तथाहि—

"कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः"

(अङ्क० १. श्लो० ४)

इति **स्वप्नाटक**श्लोकार्धस्यैवार्थो **मेघदूते**—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥"

(उत्तरमेघ० श्लो० ४६)

इत्युपन्यस्तः । **प्रतिमानाटक**स्य सप्तमाङ्के **भरत**प्रत्युद्यानस्य पूर्वरूपमिदं **राम**णोक्तं **सीतां** प्रति—

* स्वप्ननाटकोपोद्घातस्य ३४तमं पृष्ठं दृश्यताम् ।

"रेणुः समुत्पतति लोध्रसमानगौरः सम्प्रावृणोति च दिशः पवनावधूतः"

(श्लो० ४)

इति । एतदेव **रघुवंशे सीतां** प्रति **राम**वाक्ये मनाक् चित्रितं लक्ष्यते—

"विरक्तसन्ध्याकपिशं पुरस्ताद् यथा रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥"

(स० १३. श्लो० ६४)

इति । किञ्च **राम**स्य प्रप्रपितामह-प्रपितामह-पितामह-पितरः **दिलीप-रघु-अज-दशरथा** इति यथा **प्रतिमानाटक** उक्तं, तथैव **रघुवंश** उक्तं, न तु **रामायणो**क्तरीत्या । एवमन्यदपि बहु **भास**सूक्तिसच्छायं **कालिदास**काव्ये शक्यं द्रष्टुम् । एतावता **कालिदासस्य भासे वाल्मीकिव्यास**वदुच्चैर्बहुमानः सुव्यक्तः । तयोरपि हि **कालिदास**श्छायादिकमुपजीवति, **भास**स्याप्यविशेषात् । **वाल्मी-क्यु**पजीवनं यथा **शाकुन्तले**—

"शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥"

(अङ्क० ३. श्लो० ४)

इति । एतदुपजीव्यं यथा **श्रीरामायणे**—

"मेघोदरविनिर्मुक्ताः कल्हारसुखशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥"

(किष्कि० का० स० २८)

इति । अत्र 'अञ्जलिभिः पातुं शक्यम्' इति या वातानां यथाकामोपभोगयोग्यता सामान्यतः प्रत्यायिता, सा पूर्वश्लोके अविरलालिङ्गनरूपोपभोगविशेषयोग्यतात्मनोच्यते । पदानुकरणमपि स्फुटम् ।

**व्यासो**पजीवनं यथा **कुमारसम्भवे शिवं** प्रति **सप्तर्षि**वाक्यं—

"या नः प्रीतिर्विरूपाक्ष! तव निध्यानसम्भवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥"

(स० ६. श्लो० २१)

इति । एतदुपजीव्यं यथा **महाभारते श्रीकृष्णं** प्रति **विदुरवाक्यं** —

"या मे प्रीतिः पुष्कराक्ष! त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥"

(उद्यो० प० अ० ९१ श्लो० ३०)

इति । एतद्गतं प्रायः सर्वं वस्तु पूर्वश्लोक उपजीवतीत्यतिस्फुटम् ।

दिङ्नागगतं किञ्चित्। अस्ति काचित् प्रथा **कालिदास**समकालजीवी **दिङ्नागाचार्य**स्तत्प्रबन्ध-निन्दक आसीदिति, यां **मल्लिनाथो मेघदूत**गतं 'दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्' (पूर्वमेघ० श्लो० १४) इति श्लोकपादं

"**दिङ्नागाचार्य**स्य **कालिदास**प्रतिपक्षस्य हस्तावलेपान् हस्तविन्यासपूर्वकाणि दूषणानि परिहरन्"

इति व्याचक्षाण आसूचयाञ्चकार । ***दक्षिणावर्त**श्च तद्व्याख्यायां —

"**दिङ्नाग** इति कोऽप्याचार्यः **कालिदास**प्रबन्धान् 'अन्यत्रोक्तोऽयमर्थः' इति स्थूलहस्ताभिनयैर्दूषयति ।"

इति वदन्नन्योक्तार्थोपजीवित्वं तन्निन्दाकारणमाह स्म । तदिदमन्योपजीवित्वम् उक्त**भासा**द्युपजीवित्वमेव नूनं भवेत् । किन्तु एतस्मान्निमित्ताद् **दिङ्नागे**नावज्ञातोऽपि **कालिदास**स्तदीयकाव्येष्वसामान्यं श्लोकमाधुर्ययोगं पुराणकाव्यसौभाग्यपरिमलप्राचुर्यं च सहृदयपरमनिर्वृतिस्थानं गृह्णद्भिर्**निचुला**दिभिः कविभिः सहृदयैश्च सर्वैरतिवेलमभिनन्दितो बभूव, बहुमानितश्च । अत एव **दिङ्नाग**प्रातिपक्ष्यं **कालिदासं** प्रत्यकिञ्चित्करमासीत् । वस्तुतस्तु **वाल्मीकिव्यासभासा** अपूर्वकाव्यमार्गोपज्ञातारः पुराणाः कवय इति ते सर्वोपजीव्याः । अतस्तदुपजीवनं गौरवावहमेव मतं **कालिदासनिचुला**दीनाम् । **दिङ्नागः** पुनः पुरोभागित्वादेव तं दूषयाञ्चकारेति तत्त्वम् ।

* दक्षिणावर्तो मल्लिनाथप्राचीनादरुणाचलनाथादपि प्राचीनः । एतत्प्रणीतानि रघु-कुमार-मेघानां व्याख्यानान्यचिरोपलब्धानि ।

यदिदमकृत्रिमसौन्दर्यमृषिसूक्तिसाधारणं **भास**काव्येषु लक्ष्यते, तदवष्टभ्य — "सर्वथैतद्गतं शब्दार्थसौष्ठवमार्षसूक्तिसौष्ठवस्यैव, मन्ये, चारुतरं भूमिकान्तरम्" इति **स्वप्नवासवदत्तो**पोद्धाते (पृ० २७) वदद्भिरस्माभिर्**भास**स्य ऋषिसादृश्यमासूत्रितम्। वस्तुतस्तस्य पुरा मुनिप्रथाप्यासीदिति साम्प्रतमभ्यूहामः, यतः **पृथ्वीराजचरित**काव्यस्य क्रैस्ताब्दीयद्वादशशतकस्थित**जयानक**प्रणीतस्य प्रथमसर्गगततृतीयश्लोकव्याख्यायां (क्रैस्ताब्दपञ्चदशशतकजीवी) **जोनराजो भासं** मुनिरिति व्यवहृतवान्। स हि श्लोकः सव्याख्यो **भास**काव्यदाहसम्बद्धमैतिह्यं **स्वप्नोपोद्धात**–(पृ० १९) स्मृतमुपोद्बलयतीति कृत्वा (दक्खाण्) आङ्गलकलाशालास्थितादादर्शात् कारितप्रतिरूपः श्रीमता मुम्बापुरवासिना **मनस्सुखरामत्रिपाठि**सूनुना विदुषा **तनुसुखरामत्रिपाठि**-(बि. ए.) महाशयेन मदुपकारविधित्सया सदयं मह्यं निवेदितः । स यथा —

भासस्य ऋषित्वम् ।

"सत्काव्यसंहारविधौ खलानां दीप्तानि वह्नेरपि मानसानि ।
भासस्य काव्यं खलु विष्णुधर्मान् सोऽप्याननात् पारतवन्मुमोच ॥"

(पृथ्वी० स० १ श्लो० ३)

तद्व्याख्या यथा —

"सतां काव्यं, तद्विषये संहारविधौ दाहे दोषारोपणेऽग्नेरपि सकाशाद् दुर्जनानां चित्तानि दीप्तान्यजडानि भवन्ति। अत्र साधनमाह — सोऽग्निरपि **भासमुनेः** काव्यं विष्णुधर्मान् मुखात् त्यक्तवान्, नादहदित्यर्थः । पारतवदित्युपमा । अग्निर्हि वस्त्वन्तरवत् पारतं दग्धुमशक्तो मुखान्मुञ्चति । **भासव्यास**योः काव्यविषये स्पर्धां कुर्वतोः सर्वोत्कर्षवर्तित्वेन परीक्षकान्तराभावात् परीक्षार्थमग्निमध्ये तयोर्द्वयोः काव्यद्वयं क्षिप्तम् । तयोर्मध्यादग्निर्विष्णुधर्मान्नादहदिति प्रसिद्धिः* । खलैस्तु प्राप्तं सत्काव्यं दह्यते इत्यग्नेः सकाशात् खलानां दाहकत्वमित्यर्थः ॥"

---

* भासस्तुत्यर्थः कश्चिदयमर्थवादो लोकप्रसिद्ध उपन्यस्तः । 'विष्णुधर्मान्नादहद्' इत्यत्र 'विष्णुधर्मान्' इतिच्छेदे भासव्यासकाव्ययोरुभयोरपि विष्णुधर्मप्रतिपादकानंशानामेन

इति । ऋषिपदं यद्यपि मन्त्रद्रष्टरि मुख्यं, तथापि कालक्रमान्मुनिपदव्यवहार्येऽपि प्रयुक्तं बहुशो दृष्टमिति ऋषिमुनिपदयोः पर्यायप्रायत्वं सम्पन्नम् । सर्वथा च शब्द-प्रयोगविषयं लोकातिक्रममृषिकृतमिव मुनिकृतमप्यविशेषेण लोकः सहत इति कृत्वा ऋषिमुन्योरिहैक्यं विवक्षामः ।

ऋषित्वे च **भासस्य** तत्कृतिषु भूयसां **पाणिनि**लक्षणानुगतिविकलानां प्रयोगाणामृष्यन्तरकृतिष्विव दर्शनं **कालिदासभट्टबाणा**दीनां **पाणिन्य**नुगामि-नामप्युच्चैर्बहुमानश्चोपपद्येते । या तु तथाविधेषु केषुचित् प्रयोगेषु **पाणिनि**लक्ष-णानुगमसमर्थनवाचोयुक्तिः **स्वप्ननाटको**पोद्घाते (पृ० ४०) दर्शिता, सा अर्वाची-नवैयाकरणकल्पनवक्रिमविडम्बना केवलम् । न तु तया सहृदयाः परितुष्यन्ति । न च ते प्रयोगास्तावता विहायार्षत्वं लौकिकतां प्रतिपद्यन्ते । वस्तुतस्तु तथावि-धसमर्थनाभासानामप्यगोचरा अशङ्कनीयलेखकप्रमादाश्च बहव आर्षाः प्रयोगा **भास**कृतिषूपलभ्यन्ते । ते च ग्रन्थान्तनिवेशितायामार्षप्रयोगसूचिकायां द्रष्टव्याः । एवञ्च यथा **वाल्मीके**र्यथा च **व्यासस्य** श्रव्यकाव्यविषयं राजवीथीदर्शित्वमृषेः सतः, तथा **भासस्य** दृश्यकाव्यविषयं राजवीथीदर्शित्वमृषेः सतः सुष्ठु सम्भा-व्यत इति **भासस्य** तदवरज**कालिदासो**पजीव्यत्वं निदर्शितं **वाल्मीकिव्यास**-योरिव तदवरज**भासो**पजीव्यत्वं न्यायप्राप्तं द्रष्टव्यम् ।

किञ्च रूपकैर्नामाप्रत्यक्षमपीतिवृत्तं प्रत्यक्षमिवानुभाव्यते इति तानि दृश्या-

---

दग्धवानित्यर्थः । एवञ्चोभयोः साम्यं फलितम् । विष्णुधर्मादितिच्छेदे तथा मूलपाठकल्पने च पूर्ववदेवार्थः । किन्तु विष्णुधर्मानिति मूलपाठे प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण विष्णुधर्माणां प्रतिपादकं भासस्य काव्यमित्यर्थो वक्तव्यः । स च क्लिष्टः सरसकाव्याननुगुणश्च । यदि तु मूले विष्णुधर्मानित्यत्र नकारस्य लेखकप्रमादायातत्वं कल्प्येत, तदा विष्णुधर्मञ्छब्दः प्रथमैकवच-नान्तः 'सः' इत्यस्य विशेषणम् । विष्णुर्व्यापकः सर्वत्र क्रमणशीलो धर्मो दाहकत्वरूपो यस्य स तथाभूत इति तदर्थः । औत्सर्गिकदाहस्वभाववानिति यावत् । तथाभूतोऽग्निरपि भासकाव्यं न ददाहेत्यग्निदिव्यपरीक्षोत्तीर्णं भासकाव्यप्राशस्त्यं प्रतिपादितं भवति । पूर्वोक्तपाठयोस्तु भगव-द्धर्माणामग्निदिव्यपरीक्षोत्तीर्णत्वं प्रतिपादितं स्यात् । तच्च काव्यगुणप्रस्तावे न प्रकृतम् । किन्तु तृतीयपाठे व्याख्यानपङ्क्तिरनुकूलेव लक्ष्यते, तस्यां विष्णुधर्मानित्यंशे नकारत्यागस्य 'तयो-र्मध्यात्' इति वाक्ये 'भासस्य काव्यम्' इत्यनयोः पदयोर्निवेशस्य च पूर्वोक्तार्थलाभाय कल्प्य-त्वात् । सर्वथा श्लोकव्याख्ययोः पाठशुद्धिर्मातृकान्तरे परीक्षणीयैव ।

न्युच्यन्ते । तथाविधानुभवजन्मा परमश्चित्तोल्लासो रसः । स नाम सहृदयानां काम्यः । अतो रसौपयिकमेव सर्वमर्थजातं रूपकेषु निबन्धनमर्हति । रसौपयिकत्वं चार्थानामुपादीयमानानां स्वाभाविकरूपापरिहारेण प्रतिपत्तृबुद्धिं स्वरसत उपारूढानामेव भवतीति तेष्वसम्भाव्यकृत्रिमरूपसृष्टयः कविना वर्जनीयाः । अर्थानां स्वभावकृतं यत् परमं सौन्दर्यं, तदाविष्करणीयम् । तेषां रुचिरः स्वो भावोऽननुगुणालङ्कारघटनया नावच्छादनीयः । स पुनरनुगुणैरलङ्कारैरयत्नघटितैः क्वापि क्वापि काममुपस्कर्तव्यः । सेयं रीतिर्**भासेन** निपुणमादृता, **कालिदासेन** तु प्रायः । अनलङ्कृतसुन्दराण्येव हि **भासस्य** भूयिष्ठानि सूक्तानि, अलङ्कृतसुन्दराणि तु **कालिदासस्य** । अलङ्कारेषु हि— उपमा दृष्टान्तोऽर्थान्तरन्यास इत्येवञ्जातीयका ये सर्वव्यवहारसाधारणोपयोगाः सुकुमाराः, त एव **भासे**नोपात्ताः, ते चायत्नघटिताः, ते च क्वचित् क्वचिदेव; **कालिदासेन** तु ते यत्नतश्च बहुत्र चादृताः । अयमर्थ उभयकाव्यापातदर्शनादपि सुग्रह इति नोदाहरणैर्निरूप्यते ।

३. भासकालिदासकाव्ययोस्तारतम्यम् ।

किञ्च नाटकीयं सर्वं वस्तु पात्राणां मानसोक्तिभङ्ग्यान्योन्यभाषणभङ्ग्या च प्रतिपत्तृबुद्धौ यथास्वभावमारोपणीयम् । तत्रार्थस्य स्वभावो यथा लोकतोऽनुसर्तव्यः कविना, तथा तत्प्रतिपादकवाक्यस्यापि स्वभावो लोकतोऽनुसर्तव्यः । सम्भाषणवाक्यं च लोके चूर्णकरूपमेव व्यवहर्तार उत्सर्गत उपयुञ्जत इति चूर्णकरूपं तत् स्वाभाविकं, श्लोकरूपं तु नियतवर्णसन्निवेशत्वान्न स्वाभाविकम् । स पुनः श्लोकबन्धः चूर्णकवत् सुखतरार्थप्रतिपत्तिकारी क्वचित् क्वचिन्निवेश्यमानः शोभां पुष्णातीति यथास्थानं नाटकेषु तथाविधं तमादर्तुमर्हन्ति कवयः । किञ्च शब्दशब्दार्थचारुताल्पत्वेऽपि श्लोको वृत्तसहजात् सौष्ठवाच्चारुरवभासते । गद्यं तु चारुभिरेव शब्दैश्चारुभिरेवार्थैश्चारुभिरेव शब्दसन्धानैः समुचितैश्चारुतां नेतव्यमिति दुष्करं नाम गद्यम् । अत एव **काव्यालङ्कारे** “काव्यं गद्यं पद्यं च” (अधि० १. अध्या० १. सू०२१) इति सूत्रं विवृण्वन् **वामनः** “गद्यस्य पूर्वं निर्देशो दुर्लक्षविषयत्वेन दुर्बन्धत्वात्” इत्याह ; अभियुक्तोक्तिं च स्वकालप्रसिद्धां तत्र प्रमाणयति— ‘गद्यं कवीनां निकषं वदन्ति’ इति । तथा च चूर्णकं नाटके प्रधानं, श्लोकस्त्वप्रधानमिति सिद्धम् । तस्य शब्दतोऽर्थतश्च सौष्ठवसम्पत्तौ रूपकार्थः सुष्ठु सम्पन्नो भवति । अनेनैव न्यायेन शब्दतोऽर्थतश्च कामनीयकपरम-

काष्ठाधिरूढानि सरससरसानि चूर्णकानि **भासो** बहुलं प्रयुङ्क्ते, श्लोकांश्च तत्स-मानगुणान्, तानप्यल्पशः । अत एव स श्लोकरहितमपि रूपकेऽङ्कं विधत्ते, यथा **स्वप्ननाटके** द्वितीयं तृतीयं च, यथा च **चारुदत्ते** द्वितीयम् । रसं च तद्गतचूर्णकवाक्यजालमात्रात् समृद्धमनुभावयति । **पञ्चरात्रे** यद्यपि श्लोका बहु-लाः, तथापि ललितचूर्णकनिर्विशेषा एव ते । **कालिदासेन** तु **शाकुन्तले** **भासं** सर्वात्मनानुकुर्वतापि तदीयचूर्णकवाक्यतुल्यं कामनीयकं चूर्णकेषु नोपा-हितम् ।

तत्र को हेतुः स्यात् ? नूनं **भास**काले संस्कृतभाषाया इतरभाषावल्लोकव्य-वहारवीथ्यां सञ्चारस्तथा प्रचुर आसीद्, यथा विवक्षितमर्थं मूर्तमिव करे समर्प-यन्त एकान्तचारवः शब्दाः कवेर्यथाकामलभ्या अभूवन्; अर्थोल्लेखाश्च वस्तुस-त्स्वभावपरमार्थैकावगाहिनः कविधियां सहजा आसन् । तदुभयवशादकृत्रिमोदार-वक्राभिप्रायघनानि गद्यशकलानि **भासो**ऽनायासं निर्मितवान् । **कालिदास**काले तु संस्कृतभाषाया व्यवहारवीथीतो निष्क्रान्तत्वात् तथाविधाः शब्दा मृग्या जाताः । तथाविधार्थोल्लेखशालीनता च कवीनां परोक्त्युपजीवनपरत्वात् सञ्जाता । अत एव **कालिदास**काले नवीनेषु काव्येष्वौत्सर्गिकावद्यत्वप्रतीतिः, अवज्ञाविषयता च तन्मूला स्थितेति

*"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।"

"वर्तमानकवेः **कालिदासस्य** क्रियायां कथं बहुमानः ।"

इत्याभ्यां **मालविकाग्निमित्र**वाक्याभ्यां सूचितम् । परोक्त्युपजीवित्वं च कवीनां,

"मुख्यस्तावदयं न्यायो यत् स्वशक्त्या प्रवर्तते ।
अन्ये सारस्वता नाम सन्त्यन्योक्तानुवादिनः ॥"

(परि० ६. श्लो० ६.)

इति **भामहो**क्त्या **भामह**कालेऽपि स्थितमित्यवगतं, किं पुनस्तदुत्तरकाले । तस्माद् **भास**काव्यभासुरं सम्भाषणचूर्णककामनीयकं **शाकुन्तले** न भासत इत्यु-

* पुराणत्वात् सर्वं न साधु, किन्तु किञ्चिदसाध्वपि भवतीत्यर्थः । तथा नवत्वात् सर्वं नावद्यं, किन्तु किञ्चिन् किञ्चिद् अनवद्यमपि भवतीत्यर्थः ।

पपन्नम् । किन्त्वसौ महाकविर्नव्यसाधुकाव्यवैरल्यशोचनीये स्वकाले साधुकाव्यनिर्माणलभ्यां कीर्त्तिं कामयमानः सर्वाकारकाम्यं **वाल्मीकिव्यासभास**क्षुण्णं पुराणं पन्थानं प्रयत्नादुपाश्रित्य **पाणिनिभामहा**द्यनुशासनविधेयो लोकोत्तरस्वप्रतिभावैभवदृष्टैः सर्वकविलोकानुकार्यैर्वैचित्र्यविशेषैर्भूषितानि नवानि काव्यानि रचयाम्बभूव । तत्र च **रघुवंश**प्रभृतिषु यादृशं श्लोककामनीयकं, तादृशं तदधिकं वा **शाकुन्तले** चकास्त्येव; शब्दार्थसौन्दर्यं चाकृत्रिमं पुराणकाव्यादनतिन्यूनमुद्द्योतत एव श्लोकेषु सर्वतः ।

भासात् कालिदासस्यानतिविप्रकृष्टकालत्वखण्डनम् ।

न चास्मादकृत्रिमसौन्दर्याद् **भासा**दनतिविप्रकृष्टोत्तरकालता **कालिदास**स्य शङ्कनीया, वर्षसहस्रविप्रकृष्टकालजन्मनापि तेन पुराणकाव्यानुकरणसमाधिना स्वोक्तिषु सौन्दर्यस्य पुराणकाव्यादनतिन्यूनस्य सुखाधेयत्वसम्भवात् । आधुनिकेनापि हि कविना पूर्वकाव्यानुकरणसमाधिना तादृशं पूर्वकाव्यसौभाग्यं स्वोक्तावाधातुं शक्यं, किं पुनर्लोकोत्तरप्रतिभावैभवातिशयितसर्वार्वाचीनकविनिवहेन **कालिदासेन** ।

४. भासकालिदासकाव्ययोः प्राकृतसाजात्यम् ।

एतेन **कालिदास**प्राकृते **भासो**पयुक्तप्राकृतरूपसाजात्यदर्शनाद् **भासकालिदासयोः** पौर्वापर्यमल्पकालविप्रकर्षकृतमेव भवितुमर्हतीत्यूहोऽपि प्रत्युक्तः । पूर्वोक्तरीत्या संस्कृतस्य व्यवहारबाह्यत्वे तदनुचरस्य प्राकृतस्यापि तथात्वेन **कालिदास**प्राकृते **भास**प्राकृतं प्रति साजात्यस्यैव प्राप्तत्वात्; भाषावैरूप्यहेतोर्व्यवहारस्यास्तमये भाषावैरूप्यस्यासम्भाव्यत्वात्; अवश्यप्रयोज्ये च प्राकृते तस्य तदात्वलोकव्यवहारप्राप्तवैलक्षण्यस्य कस्यचिदभावे पुराणनाटकपरिशीलितप्राकृतजातीयस्यैव नवे नाटके प्रयोक्तव्यत्वात्; नवनाटकशिल्पेषु कविभिरीदृशस्यैव प्राकृतप्रयोगसमुदाचारस्याद्याप्यनुवर्तनात् । एवञ्च यथाधुनिके नाटके प्राकृतशब्दानां **कालिदास**प्राकृतशब्दसाजात्यदर्शनं तत्कर्तुः **कालिदास**सन्निकृष्टकालप्रभवतां साधयितुं नालं, तद्वदेव **कालिदास**नाटके **भास**प्राकृतसाजात्यदर्शनं **कालिदास**स्य **भास**सन्निकृष्टोत्तरकालप्रभवतां गमयितुं न समर्थम् ।

ननु च भाषायां लोकव्यवहारदशामनुभवन्त्यामेव सत्यां तदीयशब्दानां

रूपपरिवृत्तिः सम्भाव्यते । व्यवहारविच्छेदे च तेषां पूर्वसिद्धात् स्वरूपादप्रच्यु-

५. कालिदासकाले संस्कृतस्य लोकभाष्यत्वाभावः ।

तिरेव सर्वदेति सत्यं, किन्तु संस्कृतस्य व्यवहारविच्छेदः **कालिदास**काले स्थित इति कथं निश्चीयते, कथं च प्राकृतस्य? इति चेद्, उच्यते । इह हि भाषायास्तावत् क्रमिकास्तिस्रोऽवस्था भवन्ति —— आशिशुव्यवहार्यता प्रथमा, तत्सहचरी ग्रन्थव्यवहार्यता द्वितीया, ग्रन्थमात्रव्यवहार्यता तृतीयेति । व्याकरणस्य च द्वे प्रयोजने —— एकं सिद्धानां शब्दानां लाघवेन व्युत्पादनम्, अपरम् अशक्तिप्रमादादिजाद् रूपपरिवर्तनाद् अपूर्वशब्दोपजनाच्च रक्षणम् । एतच्च प्रयोजनं पूर्वप्रयोजनकुक्षिगतम्, उक्तयो रूपपरिवर्तनापूर्वशब्दोपजनयोर्लक्षणाविषयतया तत्परिहारेणैव व्याकरणेन सिद्धशब्देषु व्युत्पत्त्युत्पादनात् तयोरप्रामाण्यावधारणात् । यत्तु ऋतेऽप्यशक्त्यादिकाद् आद्ययोर्दशयोर्निष्प्रतिबन्धलोकव्यवहारप्रवाहस्वाभाव्यात् तदा तदा जायमानं शब्दानां रूपपरिवर्तनमपूर्वशब्दोपजनश्च, तयोर्निवारणे विद्यमानमपि व्याकरणं नैव प्रभविष्णु, स्वकालिकलोकव्यवहारसिद्धशब्दव्युत्पादनमात्रप्रवृत्तस्य तस्य स्वोत्तरकालिकलोकव्यवहारसेत्स्यच्छब्दविषये व्यापारायोगात् । अन्येनान्येन तु व्यवहारप्रवाहमुखप्रेक्षिणा तदा तदा व्याकरणेनोत्पत्तव्यम् । अतो न किमपि व्याकरणं तावत् परिनिष्ठितं भवति, यावदादिमे दशे भाषा नातिवर्तते । व्यवहारप्रवाहानुत्तीर्णा हि भाषा भाविरूपान्तरशब्दान्तरोपजनत्वादनभिव्यक्तकृत्स्नाकारेत्यपरिनिष्ठिता । व्यवहारप्रवाहोत्तीर्णा तु असम्भावितभाविरूपान्तरशब्दान्तरोपजनत्वात् प्रतीतकृत्स्नाकारेति परिनिष्ठिता । परिनिष्ठितभाषाविषयं च व्याकरणं परिनिष्ठितम्, अपरिनिष्ठितभाषाविषयमपरिनिष्ठितं वेदितव्यम् । एवं प्रवर्तमानायां व्याकरणपरम्परायां यस्य व्याकरणस्य प्रादुर्भावोत्तरकाले आशिशुभाषणीयतां भाषा जहाति ग्रन्थमात्रस्थायिनी, तत् परिनिष्ठितं मन्तुं शक्यं, प्रमाणभूतलोकव्यवहारप्रवाहपरिक्षयाद् भाविशब्दान्यथाभावादिशङ्काकलङ्कवैधुर्यात् । परिनिष्ठितविधिवाक्यसाधारणीश्च प्रतिपत्तीस्तस्मिन् लोकः कर्तुमर्हतीति वस्तुस्थितिः ।

तत्र संस्कृतभाषायाः **पाणिनीयं** *व्याकरणं परिनिष्ठितं **महाभाष्य**कारो मन्यते । यतः स तदनुशिष्टान् शब्दान् साधूनाह, तदन्यांश्चासाधून्; धर्मं च

---

* व्याकरणम् इत्याद्युपस्कृतः सूत्रसमुदायः । तस्य पाणिनीयत्वोक्तिस्तु पाणिनेः प्राधान्यात् ।

प्रयोगे तेषां साधूनामुपदिशति, अन्येषां चाधर्मम् । तं चेममुपदेशम् आ तत्कालादव्यभिचरन् महाजनो मुक्तसंशयं भक्त्यानुवर्तते । यदि तदपरिनिष्ठितम् (व्यवहारप्रवाहानुत्तीर्णसंस्कृतविषयम्) अमंस्यत, तदननुशिष्टानां शब्दानां सामान्यतोऽसाधुत्वं नावक्ष्यत, तथाकथने हि प्रबलवर्तमानलोकव्यवहारप्रवाहस्वभावावश्यम्भाविसम्भवा ये भाषायां रूपविशेषाः, तेऽप्यसाधव इत्युपदिष्टं स्यात् । तथा च तादृशान् रूपविशेषान् यथा व्यवहारप्रवाहो न प्रसुवीत, ते तत्प्रसूता अपि वा न भाषामाविशेयुः, तथा व्यवहर्तृभिर्व्यवहारप्रतीपं चेष्टितव्यमित्येवार्थादुपदिष्टं स्यात् । तच्च भाषाभ्युदयैषिणां तद्विधानां तत्रभवतां न साम्प्रतं स्यात् । इच्छन्नपि तल्लोको व्यवहारप्रवाहेऽनपाये नानुवर्तितुं पारयेत् । तस्मादेवं कल्पनीयं — भगवान् **महाभाष्यकारः** स्वकाले नानारूपासु देशीयभाषासु प्रचरन्तीषु संस्कृतभाषाया व्यवहारप्रवाहं (आशिशुभाष्यत्वदशाम्) सर्वतोऽस्तंयातमपश्यत् । तेनायतौ तस्या अभ्युदयं प्रति विगतप्रत्याशः क्षयं च क्रमभाविनं सम्भावयन्, सा ग्रन्थमात्रव्यवहार्यतादशाया अपि यथा नापेयात्, तथा तां संरक्षितुमैच्छत् । अनेन परिनिष्ठितेन व्याकरणेन साधूनवगत्य स्थितेषु संस्कृतग्रन्थेषु सम्यग् व्युत्पत्तिं लभमाने लोके, नवनवेषु च ग्रन्थेषु तेन निर्मीयमाणेषु ग्रन्थव्यवहार्यत्वदशा संस्कृतस्यानपायं स्थास्यतीति मत्वा जनस्य साधुशब्दानां विज्ञाने प्रयोगे च परमादरजननार्थं धर्महेतुतां प्रमाणप्रदर्शनेन स उपदिष्टवान् । लोकश्च तमुपदेशमनुसरन् समस्तसंस्कृतग्रन्थस्थायिशब्दव्युत्पादनरूपपरमोपकाराधानगुरुषु **पाणिनीय**विधिषु वेदोदितविधिसाधारणं बहुमानमद्यापि भजत इति । एवं तावत् सुव्यक्तो **महाभाष्य**कारकालेऽपि संस्कृतस्य व्यवहारप्रवाहविच्छेदः, किमुत **कालिदास**काले ।

महाभाष्यकाले संस्कृतस्य जनभाषणाभावः ।

प्राकृतस्य व्यवहारविच्छेदः कथमिति यः प्रश्नः, तस्येदानीमुत्तरमभिधातव्यम् । तच्च अवसिते संस्कृतस्य व्यवहारप्रवाहे प्राकृतस्यापि तत्सहचारिणः सतः सोऽर्थादवसितो भवतीत्येवं शक्यमभिधातुम् । कथं पुनः प्राकृतस्य संस्कृतसहचारित्वमिति चेत्, तन्निरूपणीयम् । तत्रादौ संस्कृतप्राकृतयोरुत्पत्तिक्रमश्चिन्तनीयः । यद्यपि संस्कृतशब्दानां नित्यवेदा-

६. कालिदासकाले प्राकृतव्यवहारविच्छेदः ।

श्रितत्वान्नित्यत्वमिति दर्शनं वैदिकविश्वासभूमिः, तथापि भाषात्वाविशेषात् संस्कृतस्यापि भाषान्तरस्येवोत्पत्त्या भाव्यमेवेति सा यद्यूहितुमारभ्यते, तर्हि तदूहस्यैष राजमार्गो लक्ष्यते —

पुरा नाम जनानां साधारणी भाषा काचिदासीद्, यया ते देहयात्रावर्तनमात्रपर्याप्तमादौ व्यवजह्रुः । तस्याः क्रमेण भाषणप्रवाहे प्रतायमाने जनेषु धीमन्तो यदा नवनवान् पदार्थान् ऐहिकामुष्मिकान् भोग्याभोग्यान् नानादर्शनानि च मानसैः कायिकैश्च स्वव्यायामैरुपलब्धुमारेभिरे, तेषां चोपलम्भाभ्युपायेषु स्वरूपगुणफलेषु अभिवर्धनेषु च जनान् सहजीविनो जनिष्यमाणांश्च व्युत्पत्तिमतः कर्तुमैच्छन्, तदा तयैव भाषया तथाविधपदार्थसम्बद्धवस्तुप्रतिपादकान् ग्रन्थानरचयन् । एवं बुद्धिमत्पुरुषपरम्परया नवनववस्तूपलम्भपारम्पर्यं तत्प्रतिपादकनवनवग्रन्थपारम्पर्यं च प्रवर्तितमासीत्, सर्वतः प्रथितं च । एतस्यां च ग्रन्थावस्थायां भाषायाः केवलभाषणावस्थात्यन्तासम्भविनां सौष्ठवानां योगाः सञ्जाताः । ग्रन्थेषु हि शब्दानां पारिमित्यापरित्यागेन बह्वर्थत्वमनावृत्तत्वमुच्चारणसुखत्वं सङ्घटनचारुत्वमित्येते गुणा यत्नाद् अवर्ज्यात् संसिद्धाः । यावद् यावच्चार्थापूर्वत्वं बुद्धिमदुद्यमादसकृदनुदृष्टमासीत्, तावत् तावन्नवनवाः शब्दाः कोटिशो भाषामाविष्टा अभवन् । प्रतिपादनभङ्गयश्चोच्चावचा भाषामधिरूढाः । एवं तावद् ग्रन्थदशा-भाषणदशयोरन्योन्यगुणाधायिन्योरात्मनि समावेशात् क्रमसमासादितलोकोत्तरसौभाग्या कापि शाखा मूलभाषायास्तस्याः समजायत , यां पूर्वोक्तबुद्धिमज्जनवर्गस्तत्सन्तानवर्गस्तदनुशासनप्रतीक्षी च जनवर्गोऽवललम्बे । सेयमेव, मन्ये, संस्कृतं व्यपदिष्टा, बुद्धिमत्पुरुषपारम्पर्यदृढप्रयत्नोपाहितनानासंस्कारयोगात् । ये पुनः पुरा जनेषु बुद्धिमन्दा बुद्धिमदनुशासनाप्रार्थिनो वाभवन्, तैर्भाष्यमाणायां मूलभाषायां व्यवहारप्रवाहस्वभावसुलभसम्भवा अपूर्वशब्दोपजननादयो विशेषाः संस्कृतभाषिपरिचयानुरूपा गुणाश्चोपजाताः, अभिवृद्धाश्च क्रमशः । एवञ्जातीयगुणपरिग्राहिण्याश्च तस्याः काश्चिदपराः शाखा अपि सञ्जाता असंस्कृतरूपाः । तत्र संस्कृतं संस्कारविशेषप्रभावात् तद्व्यवहर्त्रध्येतव्यग्रन्थैकरूप्याच्च देशभेदेऽप्यभिन्नरूपमेव व्यवहृतमासीत् । अपरास्तु भाषाशाखास्तदुभयाभावाद् देशभेदेन भिन्नरूपा एव व्यवहृताः संस्कृतोप-

संस्कृतोत्पत्तिः ।

Pr.

जीविन्यश्चाभूवन् । अत एव संस्कृतमसंस्कृताभिर्भाषाभिः शब्दतोऽर्थतश्च सर्वात्मनोपजीव्यमानं तासां सर्वासां पोषकमभवदिति पोषकत्वान्मातेव सन्मातृभाषेति व्यपदेशमर्हति§ । सोऽयं मूलभाषाविभागः सम्भावित उक्तः ।

अन्योऽपि तु संस्कृतव्यवहारसाम्राज्यकालावश्यम्भावी भाषाभेदः सम्भावितोऽस्ति । संस्कृतं तावत् पुरुषाः सुशिक्षिता अल्पशिक्षिताश्च ईषत्तारतम्येन सम्यग् व्यवजह्रुः, नैवाशिक्षिताः । स्त्रियश्च प्रायेण विद्याशिक्षणविरहात् संस्कृतशब्दान् यथावन्नोच्चारयितुं शक्ताः, तथा बाला अपि । ततोऽशिक्षितजनगोचरेषु व्यवहारेषु तदशक्तितारतम्यात् संस्कृतमेकदेशविकृतमधिकदेशविकृतं चोच्चारितमासीत् । इदं विकृतसंस्कृतं **प्राकृतं** व्यपदिष्टं, प्रकृतेः संस्कृतादागतत्वात् । एतच्चाशिक्षितवार्णिकस्त्रीपुरुषव्यवहृतं शिक्षितवार्णिकव्यवहारसन्निकर्षादनतिविकृतं प्रशस्तम् । वार्णिकेतरस्त्रीपुरुषैः शिक्षितासंसर्गिभिर्व्यवहृतं तु उक्तप्राकृतव्यवहर्तृपरिचयबाहुल्यात् शिक्षितवार्णिकव्यवहारपरिचयाल्पत्वात् पूर्वोक्तासंस्कृतभाषाभाषिजनव्यवहारपरिचयाच्च विकृततरं विकृततमं चाभवत् । अत एवेदं प्राकृतं न प्रशस्तम् । अस्य च प्रशस्तप्राकृतापेक्षयाधिकानां विकारमात्राणां तारतम्ययोगात् प्राकृतप्रकृतिकत्वाच्चानेके प्रकाराः सम्भाविताः । ते च प्राकृतलक्षणग्रन्थेषु द्रष्टव्याः* । इत्थं च संस्कृतव्यवहारप्रवाहो यदा प्रवृत्तः, तदाप्रभृति प्राकृतव्यवहारप्रवाहश्छायेव मूर्तिं तमनुवर्तमानः प्रथित इत्यवश्यमभ्युपेयम् । एवं सति संस्कृतव्यवहारप्रवाहस्यास्तमये प्राकृतव्यवहारप्रवाहोऽपि तत्समकालमस्तमितो भवतिच्छायेव मूर्तेरिति सिद्ध एव प्राकृतस्यापि व्यवहारविच्छेदो वेदितव्यः । तत्र संस्कृतभाषिणां नटकलाविनोदे यदाभिरुचिः सञ्जाता, तदा तदानुगुण्याद् रूपकशिल्पं तैराविर्भावितम् । रूपकेषु च पात्राणां भाषाया यथास्वभावमनुरोद्धव्यतया स्त्रीप्रभृतीनां तादात्विक-

प्राकृतोत्पत्तिः ।

---

§ यद्याद्यसृष्टिकाल एव भगवता संस्कृतं व्यवहाराय जनेभ्यः समर्पितमित्यभिमन्यते, तदा जनकत्वलक्षणमेव मातृत्वं संस्कृतस्य भाषान्तरं प्रत्यभिमन्यताम् ।

* यास्तु मूलभाषायाः शाखा असंस्कृताः पूर्वमुक्ताः, ता अपि प्राकृतपदेन कामं व्यपदेष्टुं शक्याः, प्रकृतिरौत्पत्तिकं मूलभाषारूपं, तस्याः सम्बन्धि औत्पत्तिकमूलभाषारूपप्रचुरामित्यर्थाद्, असंस्कृतत्वसादृश्यनिमित्तादुपचाराद्वा ।

व्यवहारप्रवाहसिद्धं प्राकृतं प्रयुक्तम्। न च संस्कृतभाषाव्यवहारकाले **नटकला**-विनोदसद्भावं प्रति विप्रतिपत्तव्यं, यतः **पाणिनि**ना 'पाराशर्यशिलालिभ्यां भिक्षु-नटसूत्रयोः' (४. ३. ११०) 'कर्मन्दकृशाश्वादिनिः' (४. ३. १११) इति सूत्रयता नटकलालक्षणशास्त्रं स्मर्यमाणं लक्ष्यभूताया नटकलायाः स्वपूर्वकाल-सिद्धत्वमनुमापयति। स च पूर्वकालः **पाणिनि**कालात् पूर्वतरो मुक्तसंशयं संस्कृ-तव्यवहारकाल एव प्रत्येतुं शक्यः।

अशोककालिकभाषा।

या त्व**शोक**शिलालेखभाषा **पाली** वा, सा प्रागुक्तासु मूलभाषाशाखा-स्वसंस्कृतरूपास्वन्यतमा कामं स्यात्। सा पुरा कैश्चिज्जनवर्गैर्भाषिता तेषु भूयि-ष्ठेषु **बुद्ध**मतमवलम्बमानेषु तन्मतग्रन्थाश्रिता चाभवत्। संस्कृतभाषिषु प्राकृतभाषिषु च केचिद् यदा **बुद्ध**मतं प्रविश्य पूर्व**बौद्ध**सहचरा बभूवुः, तदा तस्यां संस्कृतप्राकृतमिश्रणमप्यव्यवस्थितं समजनि। किञ्च तस्यां शोभातिशयजनकत्वबुद्ध्यापि संस्कृतं मिश्रयाम्बभूवुरान्ध्रीकैरल्यादा-विव व्यवहर्तारः†। अतस्तस्याः संस्कृतप्रचुरत्वं प्राकृतसदृशत्वं चोपपन्नम्। न तु सा साक्षात् प्राकृतं, न वा तस्य पूर्वावस्था, न च वोत्तरावस्थेति प्राकृतादन्यैव सा भवितुमर्हा। प्राकृतसारूप्यमात्राच्च तस्यां प्राकृतपदं काममुपचर्यताम्। सेय-म**शोक**काले जनभाषिता वा भवतु, **बौद्ध**ग्रन्थमात्रस्थायिनी वा भवतु; **बौद्धै**स्तु तदानीं तस्यामादरो बद्ध एवासीत्। **अशोका**र्वाचीनकालेष्वपि **बौद्ध**कविना केन-चित् सा भाषा तत्प्रणयात् कौतुकाच्च स्वच्छन्दनिर्मिते नाटके संस्कृतेन सह निवे-शितापि कामं सम्भाव्यते। सर्वथा संस्कृतव्यवहारप्रवाहगतिं भाषणे ग्रन्थे चानुरुन्धानैस्तु कविभिः प्रणीतेषु रूपकेषु संस्कृतेन सह तच्छाया-त्मकं प्राकृतमेव पूर्वोपपादितं प्रयोक्तव्यं प्रयुक्तं चासीत्। सैव च रीतिर्व्यव-हारविच्छेदकालिकैरपि कविभिरनुवृत्तेति ‡प्रागुक्तं न विस्मर्तव्यम्।

य एते नाटकेष्वार्षाः शब्दाः $ पूर्वमुक्ताः, ते किं प्रागेव **पाणिनेः**

---

† अयमर्थ आन्ध्रकेरलभाषाभागवतादिपरिशीलने सुबोधः। ‡ भासकालिदासयोः प्रा-कृतसाजात्यप्रस्तावोक्तम्। $ भासस्य ऋषित्वप्रस्तावे।

कविना प्रयुक्ताः, आहोस्वित् **पाणिने**रेव काले, उत **पाणिन्यनुशासन**स्याविर्भूतस्य प्राक् प्रचाराद्, उताहो अनुवर्तमान एव तस्य प्रचारे इतीदानीं चिन्त्यते । इह न चतुर्थः कल्पः कथमपि सम्भवी, तदा हि **पाणिन्यनु**शासनविरुद्धाञ्छब्दानापशब्द्यात् सुशिक्षितः कविर्न प्रयोक्तुं व्यवस्येत्, शब्दशरीरत्वात् काव्यस्य, शब्दासाधुत्वे श्वित्रस्पृष्टशरीरस्येव शरीरिणो जुगुप्सनीयत्वात्; ऐत्वर्यात्तु प्रयुक्तवतस्तस्य काव्यानि शिष्टैर्न परिगृह्येरन् । शिष्टापरिगृहीतेषु च तेषु कुतो लोकस्यादरावकाशः, कुतस्तरां लोकादरमूलः कवेः कीर्त्तिलाभः । प्रत्युत कवेर्लोकोपहास्यत्वमपशब्दप्रयोगप्रत्यवायोपदेशशास्त्रविस्रम्भिणः पापयोगश्च स्यात् । **भास**स्य तु तथाविधप्रयोगबहुलानि नाटकानि **पाणिनि**भक्तैरेव **कालिदासा**दिभिरतिवेलमुपलालितान्यासन्; कीर्तिश्च विस्तृतेः परां कोटिमस्पृशदिति ।

७. भासस्य पाणिनिपूर्वकालिकत्वम् ।

न तृतीयः कल्पः । स हि **पाणिनि**शास्त्रस्याप्रचारकालः कः खलु भवेत् । न तावत् कैस्तप्राचीना प्रथमा शताब्दी, **महाभाष्य**सचिवस्य सतस्तस्य तदानीं सर्वतः साम्राज्यात् । द्वितीयस्यामपि शताब्द्यां तत्प्रचारस्थितेर्वक्ष्यमाणत्वाच्च । न च द्वितीया शताब्दी, यस्यां **महाभाष्य**माविर्भूतमिति पुरावृत्तचिन्तकानां केषाञ्चिदूहः, अतिविस्तृत**सङ्ग्रह**ग्रन्थसङ्क्षेपात्मनो **महाभाष्य**स्य निर्माणे कारणं **सङ्ग्रह**ग्रन्थास्तमयं, तं च **पाणिनि**व्याकरणाध्यायिनां सङ्क्षेपरुचित्वकृतं वदता **वाक्यपदीये भर्तृहरिणा** तदानीं **पाणिनि**व्याकरणप्रचारास्थितेः कथितप्रायत्वात् । अन्यथा **पाणिनि**व्याकरणास्तमयमेव तदरुचित्वकृतं कारणं सोऽवदिष्यदिति । तच्च **भर्तृहरि**वाक्यं यथा—

पाणिनिशास्त्रस्य प्रचारकालः ।

"प्रायेण सङ्क्षेपरुचीनल्पविद्यापरिग्रहान् ।
सम्प्राप्य वैयाकरणान् **सङ्ग्रहे**ऽस्तमुपागते ॥ ४८४ ॥
कृतेऽथ **पतञ्जलि**ना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां **महाभाष्ये** निबन्धने ॥ ४८९ ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥"

(वाक्यपदीय॰ काण्ड॰ २)

इति । एष्वाद्यः श्लोकः **पुण्यराजे**नेत्थं व्याख्यातः—

> "इह पुरा **पाणिनीये**ऽस्मिन् व्याकरणे **व्याड्यु**परचितं ग्रन्थलक्षपरिमाणं **सङ्ग्रहा**भिधानं निबन्धनमासीत्। तच्च कालवशात् सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतम् । तस्मात् क्लेशभीरुत्वात् सङ्क्षेपरुचयस्ते जनाः । अत एवाल्पो विद्यासु परिग्रहः स्वीकारो येषां ते तथा । ततस्तैः **सङ्ग्रहा**ध्ययन उपेक्षिते सत्यस्तं यातः **सङ्ग्रहः** ।"

इति । अन्तिमार्धव्याख्याने च तेनेत्थमुक्तम्—

> "एतेन **सङ्ग्रहा**नुसारेण भगवता **पतञ्जलिना सङ्ग्रह**सङ्क्षेपभूतमेव प्रायशो **भाष्य**मुपनिबद्धमित्युक्तं वेदितव्यम् ॥"

इति। अत एव न तृतीयचतुर्थ्यावपि शताब्द्यौ, **सङ्ग्रह**ग्रन्थस्य प्रचयप्रत्यस्तमयौ प्रति पर्याप्ते तद्वैपुल्यानुगुणे कस्मिंश्चित् कालेऽवश्यापेक्ष्येऽत्यवरतस्तयोर्द्वयोः शताब्द्योरुपकल्पनीयत्वात्, तदानीं च **पाणिनि**व्याकरणप्रचारस्यावश्यम्भावात् । अतः पञ्चमशताब्दीति वक्तव्यम् । तस्याश्चावरतः पूर्वार्धे **कात्यायनस्य** कालो भवितुमर्हति, तस्य सूत्रतुल्यलघु**वार्त्तिक**ग्रन्थकृतोऽतिविपुलग्रन्थकर्तृ**व्याड्य**पेक्षया प्राचीनत्वौचित्यात् । तदानीं च व्याकरणस्य प्रचारोऽवर्ततैव, अत एवाध्येतृगुणातिशयाय तादात्विकशब्दव्यवहारानुरोधिभिर्नवविधिभिः **पाणिनिना** प्रमादादनुक्तदुरुक्तैः **पाणिनि**कालादृष्टनवोपजातशब्दसिद्ध्यर्थैर्वा व्याकरणमापूरितं विवृतं च **वार्त्तिककृ**ता । तस्या उत्तरार्धं तद्वप्रचारकालोऽस्तु, षष्ठ्याः शताब्द्याः पूर्वार्धं वेति चेत्, तर्हि स कालः **पाणिने**रेव अवरपक्षकल्प्यः कालः सम्भाव्यत इति द्वितीयः पक्ष एवार्थादवलम्बितो भवति । सोऽपि न युज्यते, यतः **पाणिने**रन्यादृशाः शब्दाः साधवः, **भासस्या**न्ये शब्दाः साधव इति वैषम्यं समानकालयोर्द्वयोर्लोकव्यवहारानुसारिणोर्न सम्भवति । अतः प्रथम एव कल्पः पारिशेष्यादाश्रयितव्यः । ननु यद्यार्षाभिमता अमी शब्दाः **पाणिनि**पूर्वकालव्यवहारसिद्धाः, तर्हि लौकिकत्वादवश्यं लौकिकविधिनैवान्वाख्यातुं युक्ताः **पाणिनिना,** न चान्वाख्याता इत्यसङ्गतमापद्येत । ननु **व्यासा**दिकृतिषु दृश्यमानेष्वप्यार्षेषु लौकिकत्वाविशेषादिदं चोद्यं समानम् । ऋषिमात्रव्यवहार्यत्वात् ते न लौकिकाः, किन्तु तथाविधशब्दभिन्ना एव लौकिकाः **पाणिने**रभिमताः, आर्षास्तु ते अलौ-

किकत्वादवैदिकत्वाच्च तेन नान्वाख्याता इति चेत् तस्य समाधिः, स इहापि समानः । अथ वैदिकेषु तेषां प्रवेशनमभिसन्धाय वेदगोचरैरेव विधिभिस्तानपि **पाणिनि**रनुशिष्टवानेव । अत एवच्छन्दोग्रहणेन विधीयमानं कार्यं छान्दसेष्विवार्षेषु शब्देष्वपि भवतीति सूचयितुमार्षपदं वैदिकपदस्थाने 'सम्बुद्धौ शाकल्यस्येतावनार्षे' (१. १. १६) इति प्रयुक्तवान् । अत एव च "छन्दोवदृषयः कुर्वन्ति", "छन्दोवत् कवयः* कुर्वन्ति"§ इति वदन् **महाभाष्य**कारः ऋषीणां छन्दोवच्छब्दप्रयोगसमुदाचारं सिद्धमाहेत्येवं तस्य चोद्यस्य समाधिरुच्येत, इहापि तर्हि स एव समाधिर्भविष्यति । तस्मात् स्थितोऽयं प्रथमः कल्पः — **भासे**नार्षा एते शब्दाः **पाणिनेः** प्रागेव प्रयुक्ता इति । अवश्यं चैतदेवमाश्रयणीयं — **पाणिने**ः पूर्वतरके काले लिखितपठिताभिनीतानि रूपकाण्यासन्निति, यतो रूपकलक्षणात्मकं नटसूत्रं **पाणिनिः** स्मरति — 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४. ३. ११०) इति । तच्च स्वलक्ष्यभूतानि रूपकाणि पूर्वसिद्धान्याक्षिपति, लक्षणानां लक्ष्यप्रसिद्ध्युत्तरकालभावित्वनियमात् । तानि च मुनिलक्षणमाननीयानि रूपकाणि मुनिप्रणीतान्येवार्षग्रन्थसाधारणच्छायापरिग्राहीण्येव च भवितुमर्हन्तीति तान्येवैतानि **भास**रूपकाणि निरुक्तगुणयोगादिति युक्तमङ्गीकर्तुम् ।

ननु यदि **भासस्य** क्रैस्तप्राचीनायां पञ्चम्यां षष्ठ्यां वा शताब्द्यां सत्तोपगम्यते, तर्हि तेन **राम**चरिताश्रययोर**भिषेक-प्रतिमानाटक**योर्निर्माणमसम्भावि, **राम**विषयेतिहासस्य **रामायणस्य** वा द्वितीयशताब्द्याः प्रागसिद्धत्वादिति चेद्, न, हेत्वसिद्धेः, चतुर्थशताब्दीस्थितेन **चाणक्येन राम**विषयेतिहासस्य प्रमाणतयोपन्यस्तत्वाच्चतुर्थशताब्द्याः प्रागपि तस्य सुप्रसिद्धतावगमात् । स हि **कौटिलीयार्थशास्त्रे** अजितेन्द्रियपूर्वराजवृत्तनिदर्शनप्रसङ्गे —

८. रामेतिहासस्य क्रैस्तपूर्वचतुर्थशताब्द्यां सुप्रसिद्धत्वम् ।

"मानाद् **रावणः** परदारानप्रयच्छन् (विननाश) **दुर्योधनश्च** राज्यादंशम् ।" (कौटि १. ५. ३)

---

* कवयश्चेह ऋषिप्रायाः पुराणा बोद्धव्याः । § 'यू स्त्र्याख्यौ नदी' (१. ४. ३) इति सूत्रभाष्यं द्रष्टव्यम् ।

इत्याह । अत्र परदाराप्रदानाद् **रावण**स्य, राज्यांशाप्रदानाद् **दुर्योधन**स्य च विनाशः कथितः । तत्र **रावण**विनाशेन **रामे**तिहासः, **दुर्योधन**विनाशेन **युधिष्ठिरे**तिहासश्च स्मृत इति, तौ चेतिहासौ **रामायणभारता**त्मकाविति चासन्दिग्धमेव। तयोश्च **चाणक्य**समकालिकत्वे तदचिरपूर्वकालिकत्वे वा प्रामाण्यविप्रतिपत्तिप्रसङ्गात् तत्सम्प्रतिपत्तियोग्ये **चाणक्य**पूर्वकालेऽवश्यापेक्ष्येऽवरतश्चा**णक्यात्** सप्ताष्टशताब्दीपूर्वकालिकत्वं कल्पनीयमिति **भास**काले **रामायणा**प्रसिद्धिशङ्कायाः कोऽवकाशः? । वस्तुतस्तु **रावण-दुर्योधन**निदर्शनयोः क्रमनिर्देशेन **रामायण-भारत**योः पूर्वापरकालिकत्वप्रसिद्धिरपि लौकिकी **चाणक्ये**न सूचितेति **महाभारता**पेक्षयापि पूर्वकालभवत्वं **रामायण**स्य वक्तुं न्याय्यम् । **रामायण**कथाप्रस्तावस्तत्सम्बद्ध**हनूमदा**दिवृत्तस्य बहुत्र स्मरणं **राम**स्य विष्ण्ववतारत्वाख्यानं चैवं सति **महाभारते** न्याय्यतरमिति विभावनीयम् ।

रामस्य विष्ण्ववतारत्वप्रसिद्धिः ।

नन्वस्तु **रामे**तिहासस्य **चाणक्य**पूर्वकालप्रथितत्वम् । किन्तु स एव पश्चान्नानानवार्थप्रक्षेपादिनार्वाचीनैः पूरित उपलभ्यमान**रामायणा**त्मना प्रथते । तत्र **राम**स्य विष्ण्ववतारत्वं यदुच्यते, स प्रक्षिप्तोऽर्थ इति चेद्, न । उपलभ्यमान**रामायण**स्यार्वाचीनसङ्कलितत्वे दृढप्रमाणाभावात् । भवतु वा तत् । तथापि प्राचि **रामे**तिहासे लेशतः कथिताया एव **राम**स्य विष्ण्ववतारताया नवीने **रामायणे** प्रपञ्चनौचित्येन सा प्रक्षिप्तेति वक्तुमशक्यैव । **रामो** भगवान् विष्णुरिति, तच्चरितं भगवच्चरितमिति, तच्चरितात्मकत्वाद् **रामायण**स्य पठनं पुण्यहेतुरिति च विश्वास उपलभ्यमान**रामायण**मन्तरेणाविच्छिन्नः शिष्टपारम्पर्येण लोके प्रवहति । सोऽयं मूलभूतं **रामे**तिहासमविषयीकुर्वन्नेवाकस्मान्नव**रामायणा**विषयेऽङ्कुरितः प्रवृद्धश्चेति कल्पना न खल्वाञ्जस्यं धत्ते । को हि नाम चेतनो ह्यो यावत् कुतश्चिदितिहासग्रन्थान्मानुषत्वेन प्रतीतं कञ्चित् पुरुषम् अद्य तन्मूल एव ग्रन्थान्तर ईश्वरत्वेनाख्यायमानम् ईश्वर इति प्रतीयादिति सिद्धा **चाणक्यपूर्वकालिकेऽपि** **रामे**तिहासे **राम**स्येश्वरत्वख्यातिः ।

शाक्यभिक्षुस्तु **भास**स्य विदित आसीत् । **प्रतिज्ञाविमारकचारुदत्ते**षु **श्रमण**व्यवहारस्य दर्शनात् । तावता **बुद्ध**परकालभवत्वं तु **भास**स्य न नि-

श्चेतुं शक्यं, **बुद्ध**पूर्वकालेऽपि **शाक्य**श्रमणास्थितेः सम्भावितत्वात् । **बुद्धात्** प्रागङ्कुरितं **शाक्य**श्रमणैरुपाश्रितं च मतमेव यत्किमपि पश्चाद् **बुद्ध**मुनिना **शाक्य**वंशजन्मना प्रतिष्ठां नीतमित्यभ्युपगमे बाधकाभावात् । श्रमणा हि नाम तपस्विन उच्यन्ते, तपसि श्राम्यन्तीति वा, श्रमयन्ति व्रतैः कायमिति वा व्युत्पत्तेः । तथा च वैदिकग्रन्थे **वैखानसधर्मप्रश्नादौ** श्रमणशब्दस्य व्रतिन्यर्थे भूयिष्ठः प्रयोगः । तत्र **शाक्येषु** ये श्रमणाः, ते नाम **शाक्य**श्रमणाः । स चायं श्रमणशब्दो वैदिकमतवामै**र्बौद्धैः** स्वभिक्षुषु यदा नियमेन प्रयुक्तो रूढो जातः, तदाप्रभृति वैदिकैः स्वीयेषु तस्य प्रयोगो नूनं नादृतः ।

९. श्रमणस्मरणम् ।

एतेन **स्वप्ननाटको**पोद्घातेऽ**र्थशास्त्र**कार**चाणक्या**पेक्षं यद् **भासस्य** प्राचीनत्वं स्थापितं, तदिदानीं स्थापिततरं द्रष्टव्यम् । न चोपलब्धस्या**र्थशास्त्रस्य** **चाणक्य**कृतत्वे विप्रतिपत्तव्यं, ग्रन्थे ***चाणक्य**निर्मितत्वस्य स्पष्टं कथनात्, **चाणक्य**शिष्यप्रोक्तत्वाद्यकथनाच्च, **चाणक्य**प्रणयनविस्रम्भजननक्षमायाः पुराणताया **अर्थशास्त्र**गतवाक्यगुम्फेषु प्रतिभासाच्च ।

१०. चाणक्यगतं किञ्चित् ।

अपिच **भरतमुनि**प्रणीतमिति **यन्नाट्यशास्त्र**मद्यत्वे प्रथते, यस्या**भिनवगुप्ताचार्य**निर्मितं व्याख्यानमसमग्रमस्मद्वशेऽस्ति, तदुक्ता लक्षणनियमाः प्रकृते रूपकचक्रे नानुसृता दृश्यन्ते । तत्र कामं **स्वप्नवासवदत्तं बालचरितमविमारकमभिषेकनाटकं प्रतिमानाटक**मित्येतानि पञ्चावराङ्कयुक्तत्वादिना भवन्तु नाटकानि§; **पञ्चरात्रम्** उपद्वादशनायकोपेतत्वात् त्र्यङ्कत्वाद् अङ्कानां दीर्घत्वह्रस्वत्व-ह्रस्वतरत्वयोगाच्च समवकारो गण्यतां, किन्तु रसः शृङ्गारो नाय-

११. भासस्य प्रसिद्धान्नाट्यशास्त्रात् प्राचीनत्वम् ।

---

* अस्य तिस्रः संज्ञाश्चाणक्यः कौटिल्यो विष्णुगुप्त इति; यदाह कामन्दकनीतिसारजयमङ्गला — "विष्णुगुप्तायेति सांस्कारिकी संज्ञा, चाणक्यः कौटिल्य इति द्वे जन्मभूमिगोत्रनिबन्धने" इति । विष्णुभक्तेन तत्पित्रा 'विष्णुरक्षित' इत्यर्थकं विष्णुगुप्तनामधेयं कृतं स्याद्, बुद्धभक्तेन स्वपुत्रस्य बुद्धरक्षितनामेव । तेन चाणक्यब्राह्मणो विष्णुभक्तवंश्योऽपि विज्ञेयः ।

§ नाटक-नाटी समवकारादीनां रूपकभेदानां लक्षणं भरतनाट्यशास्त्रस्याष्टादशाध्याये द्रष्टव्यम् ।

कानां पृथक्फलत्वं च तदपेक्षितं तत्र नास्ति; **मध्यमव्यायोग-दूतवाक्य-दूत-घटोत्कच-कर्णभाराणि** [illegible]: व्यायोगा गण्यन्ताम्, अल्पस्त्रीजनयुक्तत्वं तु तदपेक्षितं **दूतवाक्य-कर्णभारयो**र्नैव; **ऊरुभङ्ग**मुत्सृष्टिकाङ्को व्यपदिश्यतां करुणरसयोगात्, स्त्रीपरिदेवितयोगाच्च, किन्तु स्त्रीपरिदेवितं तत्र न बहुलम्; **प्रतिज्ञानाटिका** ईहामृग आख्यायतां स्त्रीनिमित्तोपगत-युद्धत्व-चतुरङ्कयुक्तत्वाभ्यां, किन्तु सा नाटिकेत्येव ग्रन्थे लिखितम्; **चारुदत्त**मसमग्रं यद्यपि, तथापि **मृच्छकटिक**वद् व्यपदिश्यताम्; किन्तु **बालचरिते** प्रत्यक्षकृतं युद्धमुक्तम्, **अभिषेकोरुभङ्ग**योः प्रत्यक्षकृतं मरणमुक्तम् । तच्चोभयं प्रतिषिद्धं **नाट्यशास्त्रे** इति स्पष्टं तदुक्तनियमातिलङ्घनम् । कविनामकीर्तनं **यन्नाट्यशास्त्रे** विहितं*, तदपि न कृतं क्वापि रूपक इति स्पष्टः सर्वत्र **नाट्यशास्त्रो**क्तलक्षणाननुरोधः । तेनैतदवसातुं शक्यम्—अन्यदेव **भास**नाटकस्वभावानुगुणं **नाट्यशास्त्रं भास**काले स्थितमभवदिति । तच्च **पाणिनि**स्मृतं† नटसूत्रं **शिलालिमुनि**प्रणीतं **कृशाश्वमुनि**प्रणीतं वा स्याद्, **भरतमुनि**नैव वा साक्षात् प्रणीतं **तन्नाट्यशास्त्रं** पुराणं किमपि भवेद्, **भासेन** 'भरतवाक्यम्' इति **भरत**नामधेयसंशब्दनात् ।

१२. व्यावहारिकनाट्यशास्त्रस्य भासार्वाचीनत्वम् ।

यत्तु अद्यत्वे व्यावहारिकं **नाट्यशास्त्रं** पूर्वोक्तं, तत् पश्चात्प्रवृत्तनाटकव्यवहारानुरोधेनार्वाचीनैर्मूलभूतपुरातन**भरता**दिनाट्यशास्त्रेभ्यः सङ्कलितं नवीनमेव किमपि भवेद्, **भरत**मतस्य तत्र बाहुल्येनाश्रयणाद् **भरत**मुनिप्रणीततया प्रख्यापितं च । यथा चैतद् व्यावहारिकं **नाट्यशास्त्रं** नवीनसङ्कलितं, क्रैस्तप्राचीनद्वितीयशताब्दीसमुद्भूतं च, तथा समीचीभिर्युक्तिभिः प्रमाणैश्च विद्वद्वरेण महामहोपाध्यायेन एम्. ए., सि. ऐ. इ. बिरुदवता कालिकट्टीय-एष्याटिक् समाजाध्यक्षेण **श्रीहर-**

* "प्रसाद्य रङ्गं विधिवत् कवेर्नाम च कीर्तयेत् ।
प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम् ॥"
(भरतनाट्य० अध्याय० ५. श्लो० १५४)

† 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४. ३. ११०)
'कर्मन्दकृशाश्वादिनिः' (४. ३. १११) इति सूत्राभ्यां स्मृतम् ।

**प्रसादशास्त्रिणा** साधितं तत्समाजीये मासिकपुस्तके,* तत् तत एवावगन्तव्यम् । एतस्मिन् **नाट्यशास्त्रे**$ आर्यपुत्र-भद्रमुख-कुमारादयो ये शब्दा नाटकीयपात्रसमुदाचारार्हतयोक्ताः, ते तत्पूर्वकालस्थितेषु लक्ष्यभूतेषु नाटकेषु दृष्टप्रयोगा एव तच्छास्त्रकारैर्नाटकीयलक्षणतया तत्र विहिताः । तत्रार्यपुत्र-भद्रमुख-कुमारादयो ये केचिद् **भास**नाटकेषु प्रयुक्ता दृश्यन्ते, अन्यैस्त्वन्येषु पुराणनाटकेषु प्रयुक्तैर्भाव्यम् । यत्तु **स्वप्ननाटके** (पृ० ६७) **वासवदत्ता**पितृकञ्चुकिन **उदयनं** प्रति 'आर्यपुत्र' इति समुदाचारः, स **वासवदत्ता**समुदाचार एव कञ्चुकिना **वासवदत्ता**विषयवात्सल्यादिद्योतक उपचारात् प्रयुक्तः । एवमेव **बालचरिते** (पृ० ६५) **वसुदेवं** प्रति **उग्रसेन**भटस्य आर्यपुत्रसमुदाचार औपचारिको **देवक्य**पेक्षो विज्ञेयः ।

१३. भासनाटकेभ्यो भासाश्रयभूपतेरप्रतीतिः ।

**भासा**श्रयभूतः कश्चिद् राजविशेषो नाटकेभ्य ऊहितुं न शक्यते । तन्नामनिवेशे इच्छैव तावत् कवेर्नासीत् । स यदि तमैषिष्यत्, स्थापनायां **भरत**वाक्ये वा वाक्यार्थसंसृष्टार्थकं नामधेयं निरदेक्ष्यत् । मा भूद् वा स्थापनायां प्रभुनामधेयग्रहणम्, आत्मनाम्न एव तत्रानुल्लेखाद्, **भरत**वाक्ये तु तदवश्यमकरिष्यत् । तथानिर्दिष्टमेव हि नामधेयम् 'अमुकस्य नामधेयिन इदम्' इति प्रतिपत्तृभिरवगतं सन्नामधेयिनः प्रभोः कीर्त्तिमनुवर्तयेत्, स्वकीर्त्त्यनुवृत्तिद्वारविधायित्वप्रत्ययजननद्वारा च कविविषयं प्रभोः प्रसादमभिवर्धयेत् । न च "राजसिंहः प्रशास्तु नः" इति भरतवाक्यस्थं राजसिंहपदं राजविशेषपरं, तदा हि श्रेयःप्रार्थनानिमित्तभूतमात्मस्वामित्वं शब्देन नावेदितं स्यात् । "राजा राज्यं प्रशास्तु नः", "नरेश्वरो नः पृथिवीं प्रशास्तु" इत्यादौ **भरत**वाक्ये शब्देनैव तदावेद्यते, इह तु न तथेति वैरूप्याश्रयणमापद्येत । अप्रसिद्धश्च राजसिंहनामधेयः कश्चिद् राजा **भट्टबाणात् कालिदासाद्** भगवत्**पतञ्जले**श्**चाणक्या**च्च प्राचीनः । तस्माद् राजसिंहपदं राजश्रेष्ठार्थकमेव प्रयुक्तं, "मुदितनृपतिसिंहैः" इति

---

* Vide pp. 351—361 of the Journal and Proceedings of the Asiatic Society of Bengal (N. S.) Vol. V. No. 9. for October 1909.

$ सप्तदशाध्यायो दृश्यताम् ।

**कर्णभार**-(पृ० ७२)श्लोके नृपतिसिंहशब्दवद् इत्यवसेयम् । स्थापना**भरत**-वाक्याभ्यामन्यत्र तु रसपरिवाहिकथावस्तुसमर्पके काव्याश्रयनृपतेरप्रकृतस्य केवल-नामसूचनमप्रतीतिकरमजागलस्तनदेश्यं निष्फलं न कुर्वन्ति कवयः, तत्करणे तेषां लोकोपहास्यत्वप्रसङ्गात् । एवञ्च राजविशेषनामधेयानुल्लेखे राजसामान्य-विषयाशीर्वादप्रदानपरतया कृतमिदं **भरत**वाक्यं कालान्तरभाविष्वप्येतन्नाटकाभि-नयेषु तत्तत्कालिकराजविषयेऽपि तुल्यरूपं प्रयुज्यतामिति कवेरभिसन्धिः । न च **मृच्छकटिके** सकल**भास**नाटकच्छायानुकरणस्य **चारुदत्ती**यभूयिष्ठवाक्यग्रथित-त्वस्य च दर्शनात् तद् **भासे**नैव **शूद्रक**स्य प्रीतये तदाख्यया निर्मितं स्यादिति शङ्कितुं शक्यम् । तथाहि सति स्वीयं नाटकचक्रं **भासेन** नाशितमभविष्यत् स्वस्वामिनः ख्यात्यर्थमकीर्त्त्यनुदयार्थं च । न तु तन्नाशितं तेन, तज्जनितस्य **भासयशसः कालिदास-भट्टबाणा**दिभिरुपश्लोकितत्वात् । न चातीते **शूद्रके भासेन** तत् प्रकाशितमिति वाच्यम् । हन्तैवं **भासे** स्वामिवञ्चकत्वारोपप्रसङ्ग इति कृतमेवञ्जातीयया कल्पनया ।

इयता च प्रबन्धेन **स्वप्ननाटको**पोद्घातसचिवेनैतावदर्थजातं साधितं भवति —

प्रत्यग्रोपलब्धानां **स्वप्नवासवदत्ता**दीनां त्रयोदशानां रूपकाणां शब्द-तदर्थरचनारीतिषु मिथोऽतिसंवादात् कविरेक एवेति, तद्गतानां वाक्यानां **वामन-दण्डि-भामहैः** शब्दतोऽर्थतश्चानुवादात् स कविस्तेभ्यः प्राचीन इति, स्थापनायां क्वचिदपि कविनाम्नोऽकीर्तनात् तत्र कविनामकीर्तनसमुदाचारस्योपक्रमात् प्रागेव स कविः स्थित इति, उपलब्धेषु रूपकेष्वन्यतमस्य **स्वप्नवासवदत्तस्य भास**कृतित्वप्रसिद्ध्या तस्य तद्रूपसंवा-दिनामन्येषां च रूपकाणां **कालिदास-भट्टबाणा**द्युपश्लोकितो **भास** एव प्रणेतेति, तदुक्तिषु सर्वतो रसाभिष्यन्दितायाा अतिसुखप्रसरतायाश्च दर्शनाद् **वाल्मीकि-व्यास**मुनिप्रणीतपुराणकाव्यसाधारणसर्वविधसौभाग्ययोगाच्च **भासः** संस्कृतभाष-णकालिकः पुराणः कश्चिद् ऋषितुल्यो महाकविरिति, तस्य सर्वात्मना **कालि-दासे**नानुकरणात् स्वमाननीयेषु कविषु * प्राथम्यनिर्देशाच्च रूपकनिर्माणसाधु-

१४. साधितार्थसङ्क्षेपः ।

* मालविकाग्निमित्रप्रस्तावना द्रष्टव्या ।

मार्गप्रदर्शकतयोपजीव्यकवित्ववैभवः स एक एव **कालिदासस्य** मत आसीदिति, **भासा**दतिमात्रविप्रकृष्टोत्तरकालभवस्यापि **कालिदासस्य** तदनुकरणसमाहितस्य कृतौ **भासकृ**तिकामनीयकमात्रायोगो **भास**प्राकृतसजातीयप्राकृतदर्शनं च न्याय्यमिति, **भासस्य** कृतिषु **पाणिनि**विध्युत्तीर्णशब्दप्रयोगबाहुल्येऽपि **पाणिनि**विधेय**कालिदासा**द्यादरानुवृत्तेस्तस्मिन् ऋषिप्रतिपत्तिः पुराभवदिति, उपलब्धनाट्यशास्त्रलक्षणादर्शनाद् रूपकेषु तन्मूलभूतेनान्येनैव नटसूत्रेण **पाणिनिस्मृतेन भासानुसृतेन** भवितव्यमिति, भगवत्**पतञ्जलि**काले व्याकरणपरिनिष्ठानात् संस्कृतभाषणस्यास्तमितत्वाद् **भासस्**तत्प्राचीनो भवितुमर्हन् न्यायतः **कात्यायनात् पाणिने**श्च पूर्वकालप्रभवोऽवश्यमङ्गीकर्तव्य इति, एवञ्च **चाणक्यस्य प्रतिज्ञानाटिका**गतश्लोकानुवादकत्वं **भासस्य चाणक्या**पेक्षया पूर्वतरकालिकत्वं च सुष्ठूपपन्नमिति च ।

१५. भासकृतिषु राजगृहादिस्मरणम् ।

एतेन यत् **स्वप्नवासवदत्ते** राजगृहस्योज्जयिन्याः, तद्गतानामुदयज्ञानानां § च स्मरणं *, यच्च **प्रतिज्ञानाटिकायां** † वेणुवन-नागवनयोः, **चारुदत्ते** ¶ पाटलीपुत्रस्य च स्मरणं, तत् तेषां **भासका**लादपि पूर्वकालिकत्वे गमकं द्रष्टव्यम् ।

कामं **चारुदत्ते भास**कालविमर्शानुकूलमपूर्वं वस्तु यत्किमपि दृश्येतेति स्यात् केषाञ्चित् प्रत्याशा, मया तु तत् परीक्षितवता तादृशं न किञ्चिदुपलब्धम् । स्वयमपि सहृदयैस्तत् सुपरीक्षं यथा स्यात्, तथा तद् अभिनवोपलब्धद्वितीयादर्शसाह्येन संशोध्य मुद्रणायारब्धम् । त्रिचतुरैश्च मासैस्तद् रूपकमवश्यं प्रकाशितं भविष्यति ।

१६. चारुदत्तनाटकगतं किञ्चित् ।

अस्ति पुराणेतिहासादितोऽनुपलब्धचरः **प्रतिमानाटक**तृतीयाङ्कादपूर्वः कश्चिदर्थोऽधीतः प्रतिमागृहं नाम, यस्मिन् राज्ञामतिक्रान्तानां रमणीयाशिल्पाः शिलामय्यः प्रतिमाः स्थाप्यन्ते, पूज्यन्ते च देवकुलिकैः । सोऽयं प्रतिमागृहकल्पनसमुदाचारो **भासकाले** स्थित इत्यवसीयते ।

१७. प्रतिमानाटकाधीतो वस्तुविशेषः ।

---

§ उदयज्ञानानि ग्रहनक्षत्राद्युदयविज्ञानसाधनानि (Observatory). * ११, ५४ तमपृष्ठयोः । † ३ पृष्ठे । ¶ चारुदत्तस्य द्वितीयाङ्के "संवाहकः — पाडलीपुत्तं मे जम्मभूमी । पक्किदीए वणिअओ अह्मं ।" इति ।

एषु सर्वेष्वपि रूपकेषु नायकाश्च तदीयाश्च गुणवत्तमा आश्रिताः। वृत्तं च तेषां मनोवाक्कायगतं तथा निदर्शितं, यथा व्युत्पित्सून् प्रति सदुपदेशदाने पर्यवस्येद्, न विपरीते। यत्तु *अविमारकनाटके नायकस्य गुणवतोऽपि रात्रौ कन्यापुरलङ्घनं तस्करवत्, तदपि किञ्चिद् गान्धर्वविवाहनिष्पत्त्यौपयिकम्, 'एवं नाम साहसं बह्वपायमत-दर्हेण कृतधियापि पुंसा मान्मथा विषया हठात् कारयन्तीति तेभ्यो दूरं भेतव्यम्' इत्येवमात्मकमुपदेशमर्थाद् ग्राहयितुं समर्थमेव। **चारुदत्त**मपि कल्पितेतिवृत्तं सदसत्पुरुषसमुदाचारव्युत्पादकमेव। अन्यानि तु रूपकाणि **श्रीराम-कृष्ण-युधिष्ठिरोदयना**दीनां चरितमाश्रितानि बुद्धिशिक्षणाय क्षमन्त एवेति सर्वं रमणीयम्।

१८. नाटकेषु पात्रगुणवत्ता।

---

* अविमारकनाटकाश्रितम् अविमारकचरितं भारतादिषु न दृश्यते। किन्तु तत्कथास्वभावपर्यालोचनायां कस्मिंश्चिदार्षेतिहासग्रन्थे तेन वर्णितेन भाव्यमिति प्रतिभाति। स च भासकाले स्थितः पश्चाल्लुप्तश्च नूनम्। कामसूत्रव्याख्यायां जयमङ्गलायां पारदारिकाधिकरणे चतुर्थाध्याये अविमारकचरितमन्यथोक्तम्। यथा —

"तत्र सिद्धा द्वितीयेऽहनि वाचि वक्त्रे दृष्ट्यां च प्रसादमुपलक्ष्य पुनरपि कथां प्रवर्तयेत्। शृण्वत्यां चाहल्याविमारकशकुन्तलादीन्यन्यान्यपि लौकिकानि च कथयेत् तद्युक्तानि।" (वात्स्या० कामसू० पारदारिक० अ० ४)

इयमस्य व्याख्या जयमङ्गला —

"अग्निहोत्रके(ना?णा)ग्निपरिचरणे वधूर्नियुक्ता। सा च कुण्डादुत्थितेन मूर्तिमताग्निना कामिता। जातगर्भा च तां श्वशुरः कुलदोषभयादटव्यां तत्याज। प्रसूता च (सह सुतेन? सा सुतम्। तं) शबरसेनापतिरपत्यबुद्ध्या संवर्धितवान्। तत्पुत्रश्चाजाविकसमूहेन बालवयस्त्वात् क्रीडमानः परिभ्रमन् क्षीरपानान्महाबलोऽभूद्, येन शिशुरेव हस्तग्रहणादजाविकं जघान। सेनापतिरप्यन्वर्थमस्य नाम चक्रेऽविमारक इति। ततः प्रवृद्धयौवनः कदाचिद् राज्ञोऽटव्यां समावासितस्य दुहितरं हस्तिना व्यापाद्यमानां तं हत्वा ररक्ष। ततो जातोत्कण्ठा सा स्वयमेव पाणिं ग्राहितवती।"

इति। बृहत्कथासारभूते कथासरित्सागरे तु (११२ तमतरङ्गे) अविमारकनामानुल्लेखेन कुरङ्गीचण्डालकथान्यथैव कथ्यते। यथा — प्रसेनजितो राज्ञः सुप्रतिष्ठितसंज्ञे नगरे सुता कुरङ्गी नामाभूत्। सा कदाचिदुद्याननिर्गता बन्धभ्रष्टेन गजेन दन्तयोरुपरि चिक्षिपे। परिवारे भयाद् विद्रुते वीरः कोऽपि चण्डालकुमार आगत्यासिना शुण्डां छित्त्वा कुरङ्गीं ररक्ष। अथ तत्कामुकस्याग्नौ शरीरं त्यक्तुं व्यवसितस्याग्निना वारणम्। उक्तं चाग्निना— मम ब्राह्मणकन्यायां जातो रथ्यामुखे त्वं क्षिप्तः चण्डालेनविक्षीरेण परिवर्धित इति। अथ तस्मै राज्ञाग्निप्रेरितेन कुरङ्गी दत्ता इति। नाटकोक्तात् कथायाः प्रकारादतिविलक्षणयोरनयोः प्रकारयोः किं मूलमिति न विद्मः।

स एष व्यासदेश्यो **भासो** नाम महाकविराख्यानस्याख्यायिकाया महाकाव्यस्य वा शिल्पं नादद्रे इति **स्वप्नवासवदत्तो**पोद्घातोदाहृत**भट्टबाण**सूक्तिस्वरसात् प्रतीयते । तद् यथातथा भवतु । रूपकशिल्पं तु परमं स मेने, विचक्रमे च तस्मिन्नतिचतुरम् । रूपकं हि नाम दृश्यं च भवति श्रव्यं चेत्युभयगुणयोगात् प्रशस्ततरः सन्दर्भः । तत् सन्दर्भान्तराणां प्रकृतिश्च । अत एवाह **काव्यालङ्कारे वामनः**—

१९. भासस्य रूपकनिर्माणादरः ।

"सन्दर्भेषु दशरूपकं श्रेयः" (१. ३. ३०) इति,

"दशरूपकस्यैव हीदं सर्वं विलसितं, यदुत कथाख्यायिके महाकाव्यमिति" (१. ३. ३२)

इति च ।

एषां रूपकाणां प्रचारलोपे कारणमपि सम्भाव्यते । एषु हि पुरा प्रचरत्सु कवीनामर्वाचीनानां नाटकानि प्रादुर्भूतान्यासन् । तेषु च कविबहुमानात्, तद्गुणप्रणयिनां सहृदयानामुपलालनात्, तदाश्रयभूतानां साहित्याभिवर्धनव्यवसायिनां राज्ञां प्रयत्नविशेषाच्च प्रचारं लभमानेषु क्रमेण नवनवकाव्यानामाविर्भावे प्रचारे च बहुलतामुपगते पुराणानां रूपकाणां प्रचारः शनैः शनैः सङ्कुचन्नस्तमितः । यथा हि शास्त्रेषु गुणमहिष्ठाः पुराणा ग्रन्था अतादृशां नवीनग्रन्थानां प्रचारैः प्रतिहतप्रचारा नाममात्रतोऽप्यविदिताः प्रायः सञ्जाताः, तथैव नवनवनाटकग्रन्थानामतिव्याप्तिवशाद् **भासनाटकानि** प्रायेण नामतोऽप्यविदितान्यासन् । **कालिदासभट्टबाणाभ्यां** तानि सामान्यतः प्रशंसद्भ्यां कार्त्स्न्येन परिशीलितान्येव । तत्रालङ्कारिक**वामनस्य** काले **स्वप्नवासवदत्तं प्रतिज्ञायौगन्धरायणं** चासन्दिग्धं प्रचरितं; **दण्डिनः** काले **बालचरितं चारुदत्तं** च, ताभ्यां तद्गतश्लोकानामुदाहरणात् । **अभिनवगुप्ताचार्येण नाट्यवेदविवृतौ स्वप्नवासवदत्त-दरिद्रचारुदत्त**योर्नामधेयस्योपादानात् स्थितस्तयोस्तत्काले प्रचारः । अन्यानि तु रूपकाणि **वामनादीनां** काले नूनं दुर्लभतां गतानि, अत एव, मन्ये, तद्गतं किमपि तैर्न स्मृतम् । ततो गच्छति काले सर्वाण्येतानि **भासनाटकानि** तथा गुहासु प्रसुप्तान्यभूवन्,

२०. भासरूपकाणामप्रचारः सुभाषितसङ्ग्रहेष्वस्मरणं च ।

यथा **सुभाषितावलि**प्रभृतीनां कविसूक्तिसङ्ग्रहग्रन्थानां सङ्कलयितारस्तान्यनुपलभमानास्तद्गतानि पद्यानि नोदहार्षुः । यस्तु **अविमारक**प्रथमाङ्कगतः—

"धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥"

(श्लो० १२)

इति श्लोकः **शार्ङ्गधरपद्धतौ** (श्लो० १४०५) मनाक्पाठभेदेन परिपठितः, सोऽविमारकनाटकमजानतैव **शार्ङ्गधरेण** प्रसिद्धिमात्राधीतः स्वग्रन्थे सन्निवेशितः । अत एव हि तेन तस्य कविर्ग्रन्थो वा तत्र नामतो निर्देष्टुं न पारितः । ये तु प्रकृतनाटकेष्वदृष्टाः श्लोकाः कतिपये **भास**सम्बन्धित्वेन लिखिताः **सुभाषितावल्यादौ**, तेऽन्येषु **भासनाटकेषु** सूक्तिसङ्कलयितृभिरुपलब्धाः कामं स्युः । न हि **भासे**नास्मदुपलब्धानि त्रयोदशैव रूपकाणि निर्मितानि, न तु ततोऽधिकानीत्यत्र प्रमाणमस्ति । अदृष्ट**भासग्रन्थै**रेव वा तैर्**भासी**यत्वप्रवादविस्रम्भाद् **भासकृतत्वेन** लिखिताः स्युः । सूक्तिसङ्कलयितारो हि श्लोकान् प्रसिद्धिमात्राधीतरूपान् ग्रन्थतोऽनधीतानपि सूक्तिसङ्ग्रहेषु निवेशयन्ति । तस्माद् बहुभ्यो वर्षपूगेभ्यः प्रागेव प्रकृतनाटकानां प्रचारः परिलुप्त इत्यवसीयते ।

२१. भासनाटकानां केरलेष्वादरः ।

अस्ति तावत् काचिदस्मिन् देशे कुशीलवजातिः **'चाक्यार्'** इति देशभाषासंज्ञिता । सा **नागानन्द**नाटकस्य **मन्त्राङ्क**नाटकस्य च **प्रतिज्ञायौगन्धरायण**तृतीयाङ्कभूतस्याभिनयकौतुकं देवालयोत्सवे काचित् क्वचिदद्यापि कयापि रीत्या समाचरन्ती दृश्यते । **मन्त्राङ्क** इति च तदभिनेतॄणां व्यवहारः । **प्रतिज्ञायौगन्धरायण**स्य तृतीयोऽङ्को **यौगन्धरायण**प्रयुक्तमन्त्रप्रधान इति कृत्वा **मन्त्राङ्क** इति तैर्व्यवहृत इति प्रतिभाति । किन्त्वभिनेतार एते **प्रतिज्ञायौगन्धरायणं मन्त्राङ्क**स्य तदन्तर्गतत्वं च न जानन्ति । नूनं, **भासनाटकानां** यदा प्रचारोऽवर्तत, तदानीमेवात्र देशे विद्वांसः **प्रतिज्ञानाटिका**तो **मन्त्राङ्क**मुद्धृत्य **नागानन्द**स्यैव तस्य प्रयोगपद्धतिं प्रस्थापयाम्बभूवुः । कालक्रमेण तु लुप्यमाने नाटकचक्रप्रचारे **मन्त्राङ्क**स्याकरस्मृतिरपि प्रयोक्तृपरम्परायामस्तं गता ।

लुप्तप्रचाराणामप्येषामादर्शः कोऽपि कोऽप्याखुवह्निचर्वितशेषो वा, जीर्णपत्रो वा भारते क्वचित् क्वचिन्न खलु नूनं न विद्यते; यथैतस्यातर्कितो जनपदेऽस्मिन् दृष्ट उपलम्भः, तथान्येष्वपि जनपदेषु तस्य सम्भवसम्भावनात् । अन्यत्रैतदनुपलम्भो हि आ **कश्मीर**तः प्रतिजनपदं गृहे गृहे तदुपलम्भं प्रति विचयकरणान्निश्चेतुं शक्यो नान्यथा ।

२२. भासनाटकादर्शानां भारतखण्डे क्वापि क्वापि वृत्तिसम्भावना ।

तस्यैतस्य पुराणनाटकरत्नस्तोमस्य पुरावृत्तचिन्तानुकूलवस्तुमहाखनेः सकलकव्युपजीव्यगुणसमुज्ज्वलस्येदम्प्रथम उपलम्भो यदस्मिन् राज्ये सञ्जातः, तत्र हेतुरिदानीमभिधातव्योऽवशिष्यते । स च न मृग्यः, यतः **पुरुषकार-व्यक्तिविवेक-दुर्घटवृत्ति-जयमङ्गला**प्रभृतीनामस्माभिः प्रकाशितानां, **भोजव्याकरण-नाट्यवेदविवृति-मञ्जुश्रीमूलतन्त्रा**दीनां च प्रकाशयिष्यमाणानामपूर्वग्रन्थानामुपलम्भं प्रति हेतोः स नातिरिक्तो भवितुमर्हः । अस्मिन् हि देशे प्राञ्चो राजानोऽन्ये चाभिजाताः प्रयत्नेन ग्रन्थान् संगृह्य गृहेष्वरक्षन् । तद्वंश्याश्च विरलसंस्कृतप्रचारेऽप्यस्मिन् काले जीर्णत्रुटितपत्राणामपि तेषां रक्षणे नोदासते प्रायः । स एष देशोऽस्मिन्नपूर्वग्रन्थानामुपलम्भे हेतुः । अपरश्चासौ तत्र मूर्धाभिषिक्तो हेतुरस्ति, यत् कल्याणाभिनिवेशिनः कृपानिधेर्महामहिम्नो वञ्चिमण्डलं धर्मेण परिपालयतः **श्रीमूलकमहाराजस्य** भाग्यं नाम, यद्वशात् तस्य चिरन्तनमहाग्रन्थप्रत्युज्जीवनजन्यं पुण्यं, यशश्च सर्वविधजगदुपकारकरणप्रभवमुपचीयते नित्यम् ॥

२३. वञ्चिराज्ये नाटकचक्रस्य प्रथमोपलम्भे हेतुरुपोद्घातनिगमनं च ।

**बहुप्रपञ्चनीयोऽर्थ इत्थं संक्षिप्य दर्शितः ।**
**एष चेत् परितोषाय विदुषां कृतिनो वयम् ॥**

अनन्तशयनम्
१-४-१९१४

**त. गणपतिशास्त्री.**

# निवेदना ।

---

प्रतिमानाटकस्य संशोधनाधारभूता आदर्शग्रन्था एते —

१. राजकीयग्रन्थशालास्थो जीर्णत्रुटितपत्रः क. संज्ञः.

२. कैलासपुरगोविन्दपिषारोटिसम्बन्धी जीर्णत्रुटितपत्रः ख. संज्ञः.

३. तथा तथा ग. संज्ञः.

४. पन्तलराजस्वामिकोऽसमग्रो व्याकुलितपत्रो घ. संज्ञः.

५. ताळमण्मठीयकृष्णतन्त्रिस्वामिको जीर्णपत्रो ङ. संज्ञः.

सर्वे एते तालपत्रात्मकाः केरलीयलिपयोऽतिमात्रवृद्धाश्च ।

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# प्रतिमानाटकम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

*सीताभवः पातु सुमन्त्रतुष्टः
सुग्रीवरामः सहलक्ष्मणश्च ।
यो रावणार्यप्रतिमश्च देव्या
विभीषणात्मा भरतोऽनुसर्गम् ॥ १ ॥

(नेपथ्याभिमुखमवलोक्य)

आर्ये! इतस्तावत् ।

---

* सीताभव इति । सीतायाः भवः क्षेमः तद्धेतुरित्यर्थः । सुमन्त्रतुष्टः शोभनमन्त्रमुदितः सहलक्ष्मणः लक्ष्मणसहितः सुग्रीवः शोभनकण्ठश्चासौ रामश्च सुग्रीवरामः कर्ता भरतश्च देव्या सीतया सह । सहार्थयोग इयं तृतीया । अनुसर्गं जन्मनि जन्मनि, सर्गशब्दस्य सृष्ट्यर्थत्वात् । पातु रक्षतु, अस्मानिति शेषः ।श्रीरामं विशिनष्टि—यः रावणार्यप्रतिमः । रावणारिश्चासावप्रतिमश्चेति कर्मधारयः । विभीषणः अभक्तभयङ्कर आत्मा यस्य स तथाभूतः । भवतीति शेषः । अथचात्र सीता–सुमन्त्र–सुग्रीव–राम–लक्ष्मण–रावण–विभीषण–भरताख्यानि पात्राणि मुद्रालङ्कारभङ्ग्या सूचितानि ।

(प्रविश्य)

**नटी**—(क) अय्य! इअह्मि।

**सूत्रधारः**—आर्ये! इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत्।

**नटी**—(ख) अय्य! तह। (गायति)

**सूत्रधारः**—अस्मिन् हि काले,

चरति पुलिनेषु हंसी
काशांशुकवासिनी सुसंहृष्टा।

(नेपथ्ये)

(ग) अय्य! अय्य!

(आकर्ण्य)

**सूत्रधारः**—भवतु, विज्ञातम्।

मुदिता नरेन्द्रभवने
त्वरिता प्रतिहाररक्षीव॥ २॥

(निष्क्रान्तौ)

**स्थापना।**

---

(क) आर्य! इयमस्मि।
(ख) आर्य! तथा।
(ग) आर्य! आर्य!

(प्रविश्य)

**प्रतिहारी** — (क) अय्य ! को इह कञ्चुईआणं सण्णिहिदो ।

(प्रविश्य)

**काञ्चुकीयः** — भवति ! अयमस्मि । किं क्रियताम् ।

**प्रतिहारी** — (ख) अय्य ! महाराओ देवासुरसङ्गामेसु अप्पडिहदमहारहो दसरहो आणवेदि — सिग्घं भट्टिदारअस्स रामस्स रज्जप्पहावसञ्जोअकारआ अहिसेअसम्भारा आणीअन्तु त्ति ।

**काञ्चुकीयः** — भवति ! यदाज्ञप्तं महाराजेन, तत् सर्वं सङ्कल्पितम् । पश्य,

छत्रं सव्यजनं सनन्दिपटहं भद्रासनं कल्पितं
न्यस्ता हेममयाः सदर्भकुसुमास्तीर्थाम्बुपूर्णा घटाः ।
युक्तः पुष्यरथश्च मन्त्रिसहिताः पौराः समभ्यागताः
सर्वस्यास्य हि *मङ्गलं स भगवान् वेद्यां वसिष्ठः स्थितः ॥ ३ ॥

---

(क) आर्य ! क इह काञ्चुकीयानां सन्निहितः ।

(ख) आर्य ! महाराजो देवासुरसङ्गमेष्वप्रतिहतमहारथो दशरथ आज्ञापयति — शीघ्रं भर्तृदारकस्य रामस्य राज्यप्रभावसंयोगकारका अभिषेकसंभारा आनीयन्तामिति ।

---

१. 'हि' क. ख. ग. घ. पाठः.

---

* 'मङ्गलस्य' इति पठितुं युक्ततरम् ।

**प्रतिहारी** — (क) जइ एव्वं, सोहणं किदं।

**काञ्चुकीयः** — हन्त भोः!

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥ ४ ॥

**प्रतिहारी** — (ख) तुवरदु तुवरदु[1] दाणि अय्यो।

**काञ्चुकीयः** — भवति! इदं त्वर्यते। (निष्क्रान्तः)

**प्रतिहारी** — (परिक्रम्यावलोक्य) (ग) अय्य! संभवअ! संभवअ! गच्छ, तुवं पि महाराअवअणेण अय्यपुरोहिदं जहोपआरेण तुवारेहि। (अन्यतो गत्वा) सारसिए! सारसिए! सङ्गीदसाळं गच्छिअ नाडईआणं विण्णवेहि—काळसंवादिणा णाडएण सज्जा होह त्ति। जाव अहं वि सव्वं किदं त्ति महाराअस्स णिवेदेमि। (निष्क्रान्ता)

---

(क) यद्येवं, शोभनं कृतम्।

(ख) त्वरतां त्वरतामिदानीमार्यः।

(ग) आर्य! संभवक! संभवक! गच्छ, त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारेण त्वरय। सारसिके! सारसिके! सङ्गीतशालां गत्वा नाटकीयानां विज्ञापय — कालसंवादिना नाटकेन सज्जा भवतेति। यावदहमपि सर्वं कृतमिति महाराजाय निवेदयामि।

---

१. 'दु अ' क. ख. ग. घ. पाठः.

(ततः प्रविशत्यवदातिका वल्कलं गृहीत्वा)

**अवदातिका** — (क) अहो अच्चाहिदं। परिहासेण वि इमं[1] वक्कळं उवणअन्तीए मम एत्तिअं भअं आसी, किं पुण ळोभेण परधणं हरन्तस्स। हसिदुं विअ इच्छामि । ण खु एआइणीए हसिदव्वं।

(ततः प्रविशति सीता सपरिवारा)

**सीता** — (ख) हञ्जे! ओदादिआ परिसङ्किदवण्णा विअ दिस्सइ। किंणुहु विअ एदं।

**चेटी** — (ग) भट्टिणि! सुळहावराहो परिअणो णाम। अवरज्झा भविस्सदि।

**सीता** — (घ) णहि णहि, हसिदुं विअ इच्छदि।

---

(क) अहो अत्याहितम् । परिहासेनापीमं वल्कलमुपनयन्त्या ममैतावद् भयमासीत्, किं पुनर्लोभेन परधनं हरतः । हसितुमिवेच्छामि । न खल्वेकाकिन्या हसितव्यम्।

(ख) हञ्जे! अवदातिका परिशङ्कितवर्णेव दृश्यते । किन्नुखल्विवैतत्।

(ग) भट्टिनि! सुलभापराधः परिजनो नाम। अपराद्धा भविष्यति ।

(घ) नहि नहि, हसितुमिवेच्छाति ।

---

१. 'द्द व' ख. पाठः.

**अवदातिका** — (उपसृत्य) (क) जेदु भट्टिणी । भट्टिणि ! ण खु अहं अवरज्झा ।

**सीता** — (ख) का तुमं पुच्छदि । ओदादिए ! किं एदं वामहत्थपरिग्गहिदं ।

**अवदातिका** — (ग) भट्टिणि ! इदं वक्कळं ।

**सीता** — (घ) वक्कळं किस्स आणीदं ।

**अवदातिका** — (ङ) सुणादु भट्टिणी । णेवच्छपाळिणी अय्यरेवा णिव्वुत्तरङ्गप्पओअणं असोअरुक्खस्स एक्कं किसळअं अह्मेहि जाइदा आसि । ण अ ताए दिण्णं । तदो अरिहदि अवराहो त्ति इदं गहिदं ।

**सीता** — (च) पावअं किदं । गच्छ, णिय्यादेहि ।

---

(क) जयतु भट्टिनी । भट्टिनि ! न खल्वहमपराद्धा ।

(ख) का त्वां पृच्छति । अवदातिके ! किमेतद् वामहस्तपरिगृहीतम् ।

(ग) भट्टिनि ! इदं वल्कलम् ।

(घ) वल्कलं कस्मादानीतम् ।

(ङ) शृणोतु भट्टिनी ।[1] नेपथ्यपालिन्यार्यरेवा निर्वृत्तरङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्माभिर्याचितासीत् । न च तया दत्तम् । ततोऽर्हत्यपराध इतीदं गृहीतम् ।

(च) पापकं कृतम् । गच्छ, निर्यातय ।

---

१. 'वं' ग. घ. ङ. पाठः.

**अवदातिका** — (क) भट्टिणि! परिहासणिमित्तं खु मए एदं आणीदं ।

**सीता** — (ख) उम्मत्तिए! एव्वं दोसो वड्ढइ। गच्छ, णिय्यादेहि णिय्यादेहि ।

**अवदातिका** — (ग) जं भट्टिणी आणवेदि । (प्रस्थातुमिच्छति)

**सीता** — (घ) [1]हळा ! एहि दाव ।

**अवदातिका** — (ङ) भट्टिणि ! इअह्मि ।

**सीता** — (च) हळा! किंणुहु मम वि दाव सोहदि ।

**अवदातिका** — (छ) भट्टिणि! सव्वसोहणी[2]अं सुरूवं णाम* । अळङ्करोदु भट्टिणी ।

---

(क) भट्टिनि ! परिहासनिमित्तं खलु मयैतदानीतम् ।

(ख) उन्मत्तिके ! एवं दोषो वर्धते । गच्छ, निर्यातय निर्यातय ।

(ग) यद् भट्टिन्याज्ञापयति ।

(घ) हला ! एहि तावत् ।

(ङ) भट्टिनि! इयमस्मि ।

(च) हला ! किन्नुखलु ममापि तावच् शोभते ।

(छ) भट्टिनि ! सर्वशोभनीयं सुरूपं नाम । अलङ्करोतु भट्टिनी ।

---

१. 'भट्टे! ए' ङ. पाठः.   २. 'त्ति' क. ख. पाठः.

---

* 'सर्वशोभनीयं सुरूपं नाम' इत्यस्यैवार्थस्य विवरणं 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' (शाकु. अङ्क. १) इति ।

सीता — (क) आणेहि दाव। (गृहीत्वालंकृत्य) हळा! पेक्ख, किं दाणिं सोहदि ।

अवदातिका — (ख) तव खु सोहदि णाम । सोवण्णिअं विअ वक्कळं संवुत्तं ।

सीता — (ग) हञ्जे! तुवं किञ्चि ण भणासि ।

चेटी — (घ) णत्थि वाआए पओअणं । इमे पहरिसिदा तणूरुहा मन्तेन्ति । (पुलकं दर्शयति)

सीता — (ङ) हञ्जे! आदंसअं[1] दाव आणेहि ।

चेटी — (च) जं[2] भट्टिणी आणवेदि । (निष्क्रम्य प्रविश्य) भट्टिणि! अअं आदंसओ ।

---

(क) आनय तावत् । हला! पश्य, किमिदानीं शोभते ।

(ख) तव खलु शोभते नाम। सौवर्णमिव वल्कलं संवृत्तम् ।

(ग) हञ्जे! त्वं किञ्चिन्न भणसि।

(घ) नास्ति वाचा प्रयोजनम् । इमानि प्रहृषितानि तनूरुहाणि मन्त्रयन्ते ।

(ङ) हञ्जे! आदर्शं तावदानय ।

(च) यद् भट्टिन्याज्ञापयति । भट्टिनि! अयमादर्शः ।

---

१. 'दस्सअं' ङ. पाठः. २. 'तह । (नि' ग. पाठः.

सीता — (चेटीमुखं विलोक्य) (क) चिट्ठदु[1] दाव आदंसओ । तुवं किं[2] वि वत्तुकामा विअ ।

चेटी — (ख) भट्टिणि ! एवं मए सुदं । अय्यबाळाई[3] कञ्चुई भणादि — अहिसेओ अहिसेओ त्ति ।

सीता — (ग) को[4] वि भट्टा रज्जे भविस्सदि ।

(प्रविश्यापरा)

चेटी — (घ) भट्टिणि ! पिअक्खाणिअं[5] पिअक्खाणिअं ।

सीता — (ङ) किं किं[6] पडिच्छिअ मन्तेसि ।

चेटी — (च) भट्टिदारओ किळ अहिसिञ्चीअदि ।

सीता — (छ) अवि तादो कुसळी ।

---

(क) तिष्ठतु तावदादर्शः । त्वं किमपि वक्तुकामेव ।

(ख) भट्टिनि ! एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति — अभिषेकोऽभिषेक इति ।

(ग) कोऽपि भर्ता राज्ये भविष्यति ।

(घ) भट्टिनि ! प्रियाख्यानकं प्रियाख्यानकम् ।

(ङ) किं किं प्रतीक्ष्य मन्त्रयसे ।

(च) भर्तृदारकः किलाभिषिच्यते ।

(छ) अपि तातः कुशली ।

---

१. 'भोदु दाणि आ' ख. पाठः. २. 'किञ्चि व' ङ. पाठः. ३. 'ई कहेदि' ग. ङ. पाठः. ४. 'कोचि भ' ख. ग. पाठः. ५. 'पेक्खा' ख. पाठः. ६. 'किम् ।' ङ. पाठः.

**चेटी** — (क) महाराएण एव्व अहिसिञ्चीअदि ।

**सीता** — (ख) जइ एव्वं, दुदीअं मे पिअं सुदं । विसाळदरं उच्छङ्गं करेहि[२] ।

**चेटी** — (ग) भट्टिणि ! तह । (तथा करोति)

**सीता** — (आभरणान्यवमुच्य ददाति[३])

**चेटी** — (घ) भट्टिणि ! पटहसद्दो विअ[४] ।

**सीता** — (ङ) सो एव्व ।

**चेटी** — (च) एक्कपदे ओघट्टिअ तुह्णीओ पटहसद्दो संवुत्तो ।

---

(क) महाराजेनैवाभिषिच्यते ।

(ख) यद्येवं, द्वितीयं मे प्रियं श्रुतम् । विशालतरमुत्सङ्गं कुरु ।

(ग) भट्टिनि ! तथा ।

(घ) भट्टिनि ! पटहशब्द इव ।

(ङ) स एव ।

(च) एकपदे अवघट्ट्य तूष्णीकः पटहशब्दः संवृत्तः ।

---

१. 'ण खु अ' क. पाठः. २ 'हि । (आभरणानि प्रयच्छति) हं पटहसद्दो विअ । अवदातिका–किण्णुखु एक्क' ख. पाठः. ३. 'ति) हं प' ग. पाठः. ४. 'अ । चेटी — भट्टिणि ! किण्णुखु एक्क' ग. पाठः.

सीता — (क) कोणुखु उग्घादो अहिसेअस्स । अहव बहुवुत्तन्ताणि[1] राअउळाणि णाम ।

चेटी — (ख) भट्टिणि ! एवं मए सुदं — भट्टिदारअं अहिसिञ्चीअ महाराओ वणं गमिस्सादि त्ति ।

सीता — (ग) जइ एव्वं, णं[2] सो अहिसेओ, मुहोदअं णाम ।

(ततः प्रविशति रामः)

रामः — हन्त भोः !

आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
*स्कन्धोच्चारणनम्यमानवदनप्रच्योतितोये घटे ।
राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो! विस्मयः ॥ ५ ॥

---

(क) कोनुखल्वुद्घातोऽभिषेकस्य । अथवा बहुवृत्तान्तानि राजकुलानि नाम ।

(ख) भट्टिनि ! एवं मया श्रुतं — भर्तृदारकमभिषिच्य महाराजो वनं गमिष्यतीति ।

(ग) यद्येवं, न सोऽभिषेकः, मुखोदकं नाम ।

---

१. 'न्तराणि' ख. पाठः. २. 'ण एसो अहिसेओदओ' क. ख. ग. पाठः.

---

* स्कन्धोच्चारणेन शिरस्सेचनसौकर्याय स्कन्धादूर्ध्वं नीत्वेत्यर्थः । नम्यमानाद् वदनात् प्रच्योतितुं शीलमस्येति तथाभूतं तोयं यस्य तस्मिन् । अथवा स्कन्धोच्चारणेत्यस्य स्कन्धानां वसिष्ठादीनां प्रधानानामुच्चारणेन तत्कृतमन्त्रोच्चारणं पुरस्कृत्येत्यर्थः । शेषं पूर्ववत् ।

विश्रम्यतामिदानीं पुत्रेति स्वयं राज्ञा विसर्जितस्यापनीतभारोच्छ्वसितमिव मे मनः। दिष्ट्या स एवास्मि रामः, महाराज एव महाराजः। यावदिदानीं मैथिलीं पश्यामि।

अवदातिका — (क) भट्टिणि! भट्टिदारओ खु आअच्छइ। णावणीदं वक्कळं।

रामः — मैथिलि! किमास्यते[1]।

सीता — (ख) हं अय्यउत्तो। जेदु अय्यउत्तो।

रामः — मैथिलि! आस्यताम्। (उपविशति)

सीता — (ग) जं अय्यउत्तो आणवेदि। (उपविशति)

अवदातिका — (घ) भट्टिणि! सो एव्व भट्टिदारअस्स वेसो। अळिअं विअ एदं भवे।

सीता — (ङ) तादिसो जणो अळिअं ण मन्तेदि। अहव बहुवुत्ताणि राजउळाणि णाम।

---

(क) भट्टिनि! भर्तृदारकः खल्वागच्छति। नापनीतं वल्कलम्।

(ख) हम् आर्यपुत्रः। जयत्वार्यपुत्रः।

(ग) यद् आर्यपुत्र आज्ञापयति।

(घ) भट्टिनि! स एव भर्तृदारकस्य वेषः। अलीकमिवैतद् भवेत्।

(ङ) तादृशो जनोऽलीकं न मन्त्रयते। अथवा बहुवृत्तानि राजकुलानि नाम।

---

1. 'मास्यसे' क. पाठः, 'मस्यसे' ङ. पाठः,

**रामः** — मैथिलि! किमिदं कथ्यते।

**सीता** — (क) णखु किञ्चि। इअं दारिआ भणादि— अहिसेओ अहिसेओ त्ति।

**रामः** — अवगच्छामि ते कौतूहलम्। अस्त्यभिषेकः। श्रूयताम्। अद्यास्मि महाराजेनोपाध्यायामात्यप्रकृतिजनसमक्षमेकप्रकारसंक्षिप्तं कोसलराज्यं कृत्वा बाल्याभ्यस्तमङ्कमारोप्य मातृगोत्रं स्निग्धमाभाष्य पुत्र! राम! प्रतिगृह्यतां राज्यम् इत्युक्तः।

**सीता** — (ख) तदाणीं अय्यउत्तेण किं भणिदं।

**रामः** — मैथिलि! त्वं तावत् किं तर्कयसि।

**सीता** — (ग) तक्केमि अय्यउत्तेण अभणिअ किञ्चि दिग्घं णिस्ससिअ[२] महाराअस्स पादमूळेसु पडिअं ति।

**रामः** — सुष्ठु तर्कितम्। अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते। तत्र हि पादयोरस्मि पतितः।

---

(क) नखलु किञ्चित्। इयं दारिका भणति — अभिषेकोऽभिषेक इति।

(ख) तदानीमार्यपुत्रेण किं भणितम्।

(ग) तर्कयाम्यार्यपुत्रेणाभणित्वा किञ्चिद् दीर्घं निःश्वस्य महाराजस्य पादमूलयोः पतितामिति।

---

१. 'मभिभा' ग. ङ. पाठः. २. 'अ तादस्स पादेसु' घ. ङ. पाठः.

समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥ ६ ॥

**सीता**—(क) तदो तदो ।

**रामः**—ततोऽप्रतिगृह्यमाणेष्वनुनयेषु आसन्नजरादोषैः स्वैः प्राणैरस्मि शापितः ।

**सीता**—(ख) तदो तदो ।

**रामः**—ततस्तदानीं,

शत्रुघ्नलक्ष्मणगृहीतघटेऽभिषेके
छत्रे स्वयं नृपतिना रुदता गृहीते ।
सम्भ्रान्तया किमपि मन्थरया च कर्णे
राज्ञः शनैरभिहितं च न चास्मि राजा ॥ ७ ॥

**सीता**—(ग) पिअं मे । महाराओ एव्व महाराओ, अय्यउत्तो एव्व अय्यउत्तो ।

**रामः**—मैथिलि! किमर्थं विमुक्तालङ्कारासि ।

**सीता**—(घ) ण खु दाव आवज्झामि ।

---

(क) ततस्ततः ।

(ख) ततस्ततः ।

(ग) प्रियं मे । महाराज एव महाराजः, आर्यपुत्र एवार्यपुत्रः ।

(घ) न खलु तावदाबध्नामि ।

**रामः** — न खलु । प्रत्यग्रावतारितैर्भूषणैर्भवितव्यम् । तथाहि —

कर्णौ त्वरापहृतभूषणभुग्नपाशौ
संस्रंसिताभरणगौरतलौ च हस्तौ ।
एतानि चाभरणभारनतानि गात्रे
स्थानानि नैव समतामुपयान्ति तावत् ॥ ८ ॥

**सीता** — (क) पारेदि अय्यउत्तो अळिअं पि सच्चं विअ मन्तेदुं ।

**रामः** — तेन हि अलङ्क्रियताम् । अहमादर्शं धारयिष्ये । (तथा[1] कृत्वा[3] निर्वर्ण्य) तिष्ठ ।

आदर्शे वल्कलानीव किमेते सूर्यरश्मयः ।
हसितेन परिज्ञातं क्रीडेयं नियमस्पृहा ॥ ९ ॥

अवदातिके! किमेतत् ।

**अवदातिका** — (ख) भट्टा! किण्णुहु सोहदि ण सोहदि त्ति कोदूहळेण आबज्झा ।

**रामः** — मैथिलि! किमिदमिक्ष्वाकूणां वृद्धालङ्कारस्त्वया धार्यते । अस्त्यस्माकं प्रीतिः । आनय ।

---

(क) पारयत्यार्यपुत्रोऽलीकमपि सत्यमिव मन्त्रयितुम् ।

(ख) भर्तः! किन्नुखलु शोभते न शोभते इति कौतूहलेनाबद्धानि ।

---

१. (आदर्शं गृहीत्वा निर्वर्ण्य' घ. पाठः. २. 'था कुर्वन्)' क. पाठः. ३. 'त्वा आदर्शं विलोक्य)' ग. पाठः.

सीता — (क) माखु माखु अय्यउत्तो अमङ्गळं भणादु ।

रामः — मैथिलि ! किमर्थं वारयसि ।

सीता — (ख) उज्झिदाहिसेअस्स अय्यउत्तस्स अमङ्गळं विअ मे पडिहादि ।

रामः —

मा स्वयं मन्युमुत्पाद्य परिहासे विशेषतः ।
शरीरार्धेन मे पूर्वमाबद्धा* हि यदा त्वया ॥ १० ॥

(नेपथ्ये)

हा हा महाराजः ।

सीता — (ग) अय्यउत्त ! किं एदं ।

रामः — (आकर्ण्य)

नारीणां पुरुषाणां च निर्मर्यादो यदा ध्वनिः ।
सुव्यक्तः[1] प्रभवामीति मूले दैवेन ताडितम् ॥ ११ ॥

---

(क) माखलु माखल्वार्यपुत्रोऽमङ्गलं भणतु ।

(ख) उज्झिताभिषेकस्यार्यपुत्रस्यामङ्गलमिव मे प्रतिभाति ।

(ग) आर्यपुत्र ! किमेतत् ।

---

१. 'क्तं प्र' ग. घ ङ. पाठः.

---

* वल्कला इति शेषः ।

तूर्णं ज्ञायतां शब्दः ।

(प्रविश्य)

काञ्चुकीयः — परित्रायतां परित्रायतां कुमारः ।

रामः — आर्य ! कः परित्रातव्यः ।

काञ्चुकीयः — महाराजः ।

रामः — महाराज इति । आर्य ! ननु वक्तव्यम् एकशरीरसंक्षिप्ता पृथिवी रक्षितव्येति । अथ कुत उत्पन्नोऽयं दोषः ।

काञ्चुकीयः — स्वजनात् ।

रामः — स्वजनादिति । हन्त नास्ति प्रतीकारः ।

शरीरेऽरिः प्रहरति हृदये स्वजनस्तथा ।
कस्य स्वजनशब्दो मे लज्जामुत्पादयिष्यति ॥ १२ ॥

काञ्चुकीयः — तत्रभवत्याः कैकेय्याः ।

रामः — किमम्बायाः । तेन हि उदर्केण गुणेनात्र भवितव्यम् ।

काञ्चुकीयः — कथमिव ।

रामः — श्रूयतां,

यस्याः शक्रसमो भर्ता मया पुत्रवती च या ।
फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति ॥ १३ ॥

काञ्चुकीयः — कुमार ! अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् । तस्या एव खलु वचनाद् भवदभिषेको निवृत्तः ।

रामः — आर्य ! गुणाः खल्वत्र ।

काञ्चुकीयः — कथमिव ।

रामः — श्रूयतां ,

वनगमननिवृत्तिः पार्थिवस्यैव ताव-
न्मम पितृपरवत्ता बालभावः स एव ।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मर्थं[1] च न परिभोगैर्वञ्चिता भ्रातरो मे ॥ १४ ॥

काञ्चुकीयः — अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्य इत्युक्तम् । अत्राप्यलोभः ।

रामः — आर्य ! भवान् खल्वस्मत्पक्षपातादेव नार्थमपेक्षते[2] । कुतः,

शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥ १५ ॥

काञ्चुकीयः — अथ ।

रामः — अतः परं न मातुः परिवादं श्रोतुमिच्छामि । म-

---

१. 'थ न च प' ङ. पाठः. २. 'वेक्ष' ग. पाठः.

हाराजस्य वृत्तान्तस्तावदभिधीयताम् ।

**काञ्चुकीयः —** [१]ततस्तदानीं,

शोकादवचनाद् [२]राज्ञा हस्तेनैव विसर्जितः ।
किमप्यभिमतं मन्ये मोहं च नृपतिर्गतः ॥ १६ ॥

**रामः —** कथं मोहमुपगतः ।

(नेपथ्ये)

कथं कथं मोहमुपगत इति ।
यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया

**रामः —**(आकर्ण्य पुरतो विलोक्य)

अक्षोभ्यः क्षोभितः केन लक्ष्मणो धैर्यसागरः ।
येन रुष्टेन पश्यामि शताकीर्णमिवाग्रतः ॥ १७ ॥

(ततः प्रविशति [३]धनुर्बाणपाणिर्लक्ष्मणः)

**लक्ष्मणः[४] —** (सक्रोधम्) कथं कथं मोहमुपगत इति ।

यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते ।
अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं लोकं कर्तुं यतश्छलिता वयम् ॥ १८ ॥

---

१. 'श्रूयतां, शो' ख. पाठः. २. 'राजा ह' क. ख. घ. ङ. पाठः. ३. 'धरः सक्रोधो-लः' क. ङ. पाठः. ४. 'णः—क' क. ङ. पाठः.

**सीता** — (क) अय्यउत्त! रोदिदव्वे काळे सोमित्तिणा धणू गहीदं। अपुव्वो खु से आआसो।

**रामः** — सुमित्रामातः! किमिदम्।

**लक्ष्मणः** — कथं कथं किमिदं नाम।

क्रमप्राप्ते हृते राज्ये भुवि शोच्यासने नृपे।
इदानीमपि सन्देहः किं क्षमा निर्मनस्विता ॥ १९ ॥

**रामः** — सुमित्रामातः! अस्मद्राज्यभ्रंशो भवत उद्योगं जनयति। आः, अपण्डितः खलु भवान्।

भरतो वा भवेद् राजा वयं वा ननु तत् समम्।
यदि तेऽस्ति धनुःश्लाघा स राजा परिपाल्यताम् ॥ २० ॥

**लक्ष्मणः** — न शक्नोमि रोषं धारयितुम्। भवतु भवतु। गच्छामस्तावत्। (प्रस्थितः)

**रामः** —

त्रैलोक्यं दग्धुकामेव ललाटपुटसंस्थिता।
भ्रुकुटिर्लक्ष्मणस्यैषा ‡नियतीव व्यवस्थिता ॥ २१ ॥

---

(क) आर्यपुत्र! रोदितव्ये काले सौमित्रिणा धनुर्गृहीतम्। अपूर्वः खल्वस्यायासः।

---

‡ नियतीव विधिरिव व्यवस्थिता अशक्यप्रतिविधाना। नियतिशब्दस्य क्तिजन्तत्वात् 'कृदिकारादक्तिनः' इति ङीप्।

सुमित्रामातः! इतस्तावत्।

लक्ष्मणः — आर्य! अयमस्मि ।

रामः — भवतः स्थैर्यमुत्पादयता मयैवमभिहितम्। उच्यतामिदानीम्।

ताते धनुर्नमयि* सत्यमवेक्षमाणे
मुञ्चानि मातरि शरं स्वधनं हरन्त्याम्।
दोषेषु बाह्यमनुजं भरतं हनानि
किं रोषणाय रुचिरं त्रिषु पातकेषु ॥ २२ ॥

लक्ष्मणः — (सबाष्पम्) हा धिगस्मान्। अविज्ञायोपालभसे[1]।

यत्कृते महति क्लेशे राज्ये मे न मनोरथः ।
वर्षाणि किल वस्तव्यं चतुर्दश वने त्वया ॥ २३ ॥

रामः — अत्र† मोहमुपगतस्तत्रभवान्‡ । हन्त निवेदितमप्रभुत्वम्। मैथिलि!

मङ्गलार्थेऽनया दत्तान् वल्कलांस्तावदानय ।
करोम्यन्यैर्नृपैर्धर्मं नैवाप्तं नोपपादितम् ॥ २४ ॥

---

1. 'त्तं' ङ. पाठः.

---

* 'नमय' इति वा, 'नमतु' इति वा पठितुं युक्तम्। † अत्र चतुर्दशवर्षवनवासे। ‡ तत्रभवान् दशरथः।

**सीता**—(क) गह्लदु अय्यउत्तो ।

**रामः**—मैथिलि ! किं व्यवसितम् ।

**सीता**—(ख) णं सहधम्मआरिणी क्खु अहं ।

**रामः**—मयैकाकिना किल गन्तव्यम् ।

**सीता**—(ग) अदोणुखु अणुगच्छामि ।

**रामः**—वने खलु वस्तव्यम् ।

**सीता**—(घ) तं खु मे पासादो ।

**रामः**—श्वश्रूश्वशुरशुश्रूषापि च ते निर्वर्तयितव्या ।

**सीता**—(ङ) णं उद्दिसिअ देवदाणं पणामो करीअदि ।

**रामः**—लक्ष्मण ! वार्यतामियम् ।

**लक्ष्मणः**—आर्य ! नोत्सहे श्लाघनीये काले* वारयितुमत्रभवतीम् । कुतः,

---

(क) गृह्णात्वार्यपुत्रः ।
(ख) ननु सहधर्मचारिणी खल्वहम् ।
(ग) अतोनुखल्वनुगच्छामि ।
(घ) तत् खलु मे प्रासादः ।
(ङ) एनाम् उद्दिश्य देवतानां प्रणामः क्रियते ।

---

१. 'ळिस्सदु' ख. ग. ङ. पाठः.

---

* 'कार्ये' इति वा पाठः स्यात् ।

अनुचरति शशाङ्कं राहुदोषेऽपि तारा
पतति च वनवृक्षे याति भूमिं लता च ।
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः ॥ २५ ॥

(प्रविश्य)

चेटी[1] — (क) जेदु भट्टिणी । णेवच्छपालिणी अय्यरेवा पणमिअ[2] विण्णवेदि — ओदादिआए सङ्गीदसाळादो आच्छिन्दिअ वक्कळा आणीदा । इमा अवरा अणणुहूदा वक्कळा । णिव्वत्तीअदु दाव किळ पओअणं त्ति ।

रामः — भद्रे! आनय, *सन्तुष्टैषा। वयमर्थिनः।

चेटी — (ख) गह्णदु भट्टा । (तथा कृत्वा निष्क्रान्ता)

---

(क) जयतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा प्रणम्य विज्ञापयति — अवदातिकया सङ्गीतशालाया आच्छिद्य वल्कला आनीताः । इमेऽपरा अननुभूता वल्कलाः । निर्वर्त्यतां तावत् किल प्रयोजनमिति ।

(ख) गृह्णातु भर्ता ।

---

१. 'प्रतिहारी—' ङ. पाठः. २. 'णामपुव्वं वि' क. ख. पाठः.

---

* सन्तुष्टा प्रागेव लब्धवल्कलत्वात् ।

(रामो गृहीत्वा परिधत्ते)

लक्ष्मणः — प्रसीदत्वार्यः ।

नियोगाद् भूषणान्माल्यात् सर्वेभ्योऽर्धं प्रदाय मे ।
चीरमेकाकिना बद्धं चीरे खल्वसि मत्सरी ॥ २६ ॥

रामः — मैथिलि ! वार्यतामयम् ।

सीता — (क) सोमित्ते ! णिवत्तीअदु किळ ।

लक्ष्मणः — आर्ये !

गुरोर्मे पादशुश्रूषां त्वमेका कर्तुमिच्छसि ।
तवैव[2] दक्षिणः पादो मम सव्यो भविष्यति ॥ २७ ॥

सीता — (ख) दीअदु खु अय्यउत्तो (?)* । सन्तप्पदि सोमित्ती ।

रामः — सौमित्रे ! श्रूयताम् । वल्कलानि नाम,

---

(क) सौमित्रे ! निवर्ततां किल ।

(ख) दीयतां खल्वार्यपुत्र ! । संतप्यते सौमित्रिः ।

---

१. 'णः--आर्य ! नि' ख. पाठः. २. 'ष द' क. ग. पाठः.

---

* 'दीअदु खु अय्यउत्त !' इति पठनीयं भाति ।

तपःसङ्ग्रामकवचं नियमद्विरदाङ्कुशः ।
खलीनमिन्द्रियाश्वानां गृह्यतां धर्मसारथिः ॥ २८ ॥

**लक्ष्मणः** — अनुगृहीतोऽस्मि । (गृहीत्वा परिधत्ते)

**रामः** — श्रुतवृत्तान्तैः पौरैः सन्निरुद्धो राजमार्गः । उत्सार्यतामुत्सार्यतां तावत् ।

**लक्ष्मणः** — आर्य ! अहमग्रतो यास्यामि । उत्सार्यतामुत्सार्यताम् ।

**रामः** — मैथिलि ! अपनीयतामवगुण्ठनम् ।

**सीता** — (क) जं अय्यउत्तो आणवेदि । (अपनयति)

**रामः** — भो भोः पौराः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

स्वैरं हि पश्यन्तु कलत्रमेतद्
बाष्पाकुलाक्षैर्वदनैर्भवन्तः ।
निर्दोषदृश्या हि भवन्ति नार्यो
यज्ञे विवाहे व्यसने वने च ॥ २९ ॥

(क) यदार्यपुत्र आज्ञापयति ।

१. 'ता — तह । (अप' घ., 'ता चावगुण्ठनमप' ख. पाठः.

(प्रविश्य)

काञ्चुकीयः — कुमार ! न खलु न खलु गन्तव्यम् । एष हि महाराजः,

श्रुत्वा ते वनगमनं वधूसहायं
सौभ्रात्रव्यवसितलक्ष्मणानुयात्रम् ।
उत्थाय क्षितितलरेणुरूषिताङ्गः
कान्तारद्विरद इवोपयाति जीर्णः ॥ ३० ॥

लक्ष्मणः — आर्य !

चीरमात्रोत्तरीयाणां किं दृश्यं वनवासिनाम् ।

रामः —

गतेष्वस्मासु राजा नः शिरःस्थानानि पश्यतु ॥ ३१ ॥

(इति निष्क्रान्ताः सर्वे)

प्रथमोऽङ्कः ।

---

१. 'तश्रीरारण्यद्वि' क. पाठः २. 'नः — ची' ख. पाठः.

## अथ द्वितीयोऽङ्कः ।

---

(ततः प्रविशति काञ्चुकीयः)

काञ्चुकीयः — भो भोः प्रतिहारव्यापृताः! स्वेषु स्वेषु स्थानेष्वप्रमत्ता भवन्तु भवन्तः ।

(प्रविश्य)

प्रतिहारी — (क) अय्य! किं एदं ।

काञ्चुकीयः — एष हि महाराजः सत्यवचनरक्षणपरो रामम[1]रण्यं गच्छन्तमुपावर्तयितुमशक्तः पुत्र[2]विरहशोकाग्निना दग्धहृदय उन्मत्त इव बहु प्रलपन् समुद्रगृ[3]हके शयानः,

मेरुश्चलन्निव युगक्षयसन्निकर्षे
शोषं व्रजन्निव महोदधिरप्रमेयः ।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः
शोकाद् भृशं शिथिलदेहमतिर्नरेन्द्रः ॥ १ ॥

प्रतिहारी — (क) हं[4] एव्वंगओ महाराओ ।

काञ्चुकीयः — भवति! गच्छ ।

---

(क) आर्य! किमेतत् ।

(क) हम् एवंगतो महाराजः ।

---

१. 'म' क. ङ. पाठः. २. 'त्रशो' क. ग. ङ. पाठः. ३. 'हे श' ङ. पाठः.
४. 'हा हा म' ङ. पाठः.

**प्रतिहारी** — (क) अय्य ! तह । (निष्क्रान्ता)

**काञ्चुकीयः** — (सर्वतो विलोक्य) अहोतुखलु रामनिर्गमनदिनादारभ्य शून्यैवेयमयोध्या संलक्ष्यते । कुतः,

नागेन्द्रा यवसाभिलाषविमुखाः सास्रेक्षणा वाजिनो
हेषाशून्यमुखाः सवृद्धवनिताबालाश्च पौरा जनाः ।
त्यक्ताहारकथाः सुदीनवदनाः क्रन्दन्त उच्चैर्दिशा
रामो याति यया सदारसहजस्तामेव पश्यन्त्यमी ॥ २ ॥

यावदहमपि महाराजस्य समीपवर्ती [2]भविष्यामि । (परिक्रम्यावलोक्य) अये अयं महाराजो महादेव्या सुमित्रया च सुदुःसहमपि पुत्रविरहसमुद्भवं शोकं निगृह्यात्मानमेव संस्थापयन्तीभ्यामन्वास्यमानस्तिष्ठति । कष्टा खल्ववस्था वर्तते । एष एष महाराजः,

पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्व[3]हः ॥ ३ ॥

(निष्क्रान्तः)

**मिश्रविष्कम्भकः ।**

---

(क) आर्य ! तथा ।

---

१. 'यः — परिक्रम्यावलो' क. ख. ग. घ. पाठः. २. 'भवामि' ङ. पाठः. ३. 'हः ॥ यावदहमपि महाराजस्य प्रत्यनन्तरीभविष्यामि । (नि' क. ङ. पाठः.

(ततः प्रविशति यथानिर्दिष्टो राजा देव्यौ च)

**राजा —**

हा[1] वत्स! राम! जगतां नयनाभिराम!
हा वत्स! लक्ष्मण! सलक्षणसर्वगात्र! ।
हा साध्वि! मैथिलि! पतिस्थितचित्तवृत्ते!
हा हा गताः किल वनं बत मे तनूजाः ॥ ४ ॥

चित्रमिदं[2] भोः!, यद् भ्रातृस्नेहात् पितरि विमुक्तस्नेहं[3]मपि तावल्लक्ष्मणं द्रष्टुमिच्छामि । वधु! वैदेहि!

रामेणापि परित्यक्तो लक्ष्मणेन च गर्हितः ।
अयशोभाजनं लोके परित्यक्तस्त्वयाप्यहम् ॥ ५ ॥

पुत्र राम! वत्स लक्ष्मण! वधु वैदेहि! प्रयच्छत मे प्रतिवचनं पुत्रकाः! । शून्यमिदं भोः! । न मे कश्चित् प्रतिवचनं प्रयच्छति । कौसल्यामातः! क्वासि ।

सत्यसन्ध! जितक्रोध! विमत्सर! जगत्प्रिय!।
गुरुशुश्रूषणे युक्त! प्रतिवाक्यं प्रयच्छ मे ॥ ६ ॥

हा क्वासौ सर्वजनहृदयनयनाभिरामो रामः, क्वासौ मयि गुर्वनुवृत्तिः, क्वासौ शोकार्तेष्वनुकम्पा, क्वासौ तृणवदगणितराज्यै-

---

१. 'हा राम! लोकग्रहणाभिराम! हा लक्ष्मण! भ्रातृषु रश्मिभूत! । हा साध्वि! वैदेहि! कुलप्रदीपे! हा कीर्तिरेषां गमनात् प्रनष्टा ॥' क. ख. घ. ङ. पाठः. २. 'दं भोः भ्रा' क. ख., 'दं भ्रातृस्नेहेन पि' ग. ङ. पाठः. ३. 'हं लक्ष्मणमपि तावद् द्र' क. ख. पाठः.

श्चर्यः । पुत्र! राम! वृद्धं पितरं मां परित्यज्य किमसम्बद्धेन धर्मेण ते कृत्यम् । हा धिक् । कष्टं भोः !

सूर्य इव गतो रामः
सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।
सूर्यदिवसावसाने
छायेव न दृश्यते सीता ॥ ७ ॥

(ऊर्ध्वमवलोक्य) भोः कृतान्तहतक !

अनपत्या वयं रामः पुत्रोऽन्यस्य महीपतेः ।
वने व्याघ्री च कैकेयी त्वया किं न कृतं त्रयम् ॥ ८ ॥

**कौसल्या** — (सरुदितम्) (क) अळं दाणि महाराओ अदिम-[२]त्तं सन्तप्पिअ परवसं अत्ताणं कादुं । णं सा ते अ कुमारा महा-[३]राअस्स समआवसाणे पेक्खिदव्वा भविस्सन्ति ।

**राजा** — का त्वं भोः! ।

**कौसल्या** — (ख) असिणिद्धपुत्तप्पसविणी खु अहं ।

---

(क) अलमिदानीं महाराजोऽतिमात्रं सन्तप्य परवशमात्मानं कर्तुम् । ननु सा तौ च कुमारौ महाराजस्य समयावसाने प्रेक्षितव्या भविष्यन्ति ।

(ख) अस्निग्धपुत्रप्रसविनी खल्वहम् ।

---

१. 'ओ सोअप' ग. घ. पाठः. २. 'त्तं सोअस्स अत्ताणं दादुं' क. पाठः. ३. 'एण पे' क. ख. घ. ङ. पाठः. ४. 'आद्दणी' ग. घ. पाठः.

राजा — किं किं सर्वजनहृदयनयनाभिरामस्य रामस्य जननी त्वमसि कौसल्या ।

कौसल्या — (क) महाराअ ! सा एव मन्दभाइणी खु अहं ।

राजा — कौसल्ये ! सारवती खल्वसि । त्वया हि खलु रामो गर्भे धृतः ।

अहं हि[2] दुःखमत्यन्तमसह्यं ज्वलनोपमम् ।
नैव सोढुं न संहर्तुं शक्नोमि मुषितेन्द्रियः ॥ ९ ॥

(सुमित्रां विलोक्य) इयमपरा का ।

कौसल्या — (ख) महाराअ ! वच्छळक्खण (इत्यर्धोक्ते)

राजा — (सहसोत्थाय) क्वासौ क्वासौ लक्ष्मणः । न दृश्यते । भोः ! कष्टम् ।

(देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते)

कौसल्या — (ग) महाराअ ! वच्छळक्खणस्स जणणी सु-

---

(क) महाराज! सैव मन्दभागिनी खल्वहम् ।
(ख) महाराज ! वत्सलक्ष्मण ।
(ग) महाराज ! वत्सलक्ष्मणस्य जननी सुमित्रेति वक्तुं मयोपक्रान्तम् ।

---

१. 'धारितः' ख. घ. ङ. पाठः. २. 'तु' ग. ङ. पाठः.

मित्तत्ति वत्तुं मए उवक्कन्दं ।

**राजा** — अयि सुमित्रे!

तवैव पुत्रः सत्पुत्रो येन नक्तन्दिनं* वने ।
रामो रघुकुलश्रेष्ठश्छाययेवानुगम्यते ॥ १० ॥

(प्रविश्य)

**काञ्चुकीयः** — जयतु महाराजः । एष खलु तत्रभवान् सुमन्त्रः प्राप्तः ।

**राजा** — (सहसोत्थाय सहर्षम्) अपि रामेण ।

**काञ्चुकीयः** — न खलु, रथेन ।

**राजा** — [1]कथं कथं रथेन केवलेन । (इति मूर्छितः पतति)

**देव्यौ** — (क) महाराअ! समस्सासिहि समस्सासिहि । (गात्राणि परामृशतः)

**काञ्चुकीयः** — भोः! कष्टम् । ईदृग्विधाः पुरुषविशेषा ईदृशीमापदं प्राप्नुवन्तीति विधिरनतिक्रमणीयः । महाराज! समाश्वसिहि समाश्वसिहि ।

---

(क) महाराज! समाश्वसिहि समाश्वसिहि ।

---

१. 'किं किं रथेन । (इ' ग. पाठः.

---

* 'नक्तन्दिवम्' इति स्यात् ।

**राजा** — (किञ्चित् समाश्वस्य) बालाके! सुमन्त्र एक एव ननु प्राप्तः ।

**काञ्चुकीयः** — महाराज! अथकिम् ।

**राजा** — कष्टं भोः !

शून्यः प्राप्तो यदि रथो भग्नो मम मनोरथः ।
नूनं दशरथं नेतुं कालेन प्रेषितो रथः ॥ ११ ॥

[1]तेन हि शीघ्रं प्रवेश्यताम् ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

**राजा** —

धन्याः खलु वने वातास्तटाकपरिवर्तिनः ।
विचरन्तं वने रामं ये स्पृशन्ति यथासुखम् ॥ १२ ॥

(ततः प्रविशति सुमन्त्रः)

**सुमन्त्रः** — (सर्वतो विलोक्य सशोकम्)

एते भृत्याः स्वानि कर्माणि हित्वा
स्नेहाद् रामे जातबाष्पाकुलाक्षाः ।
चिन्तादीनाः शोकसंदग्धदेहा
विक्रोशन्तं पार्थिवं गर्हयन्ति ॥ १३ ॥

---

१. 'बालाके! प्रवेशय तम्' घ. पाठः. २. 'स्वामिनं ग' ग. ङ. पाठः.

(उपेत्य)[1] जयतु महाराजः ।

राजा — भ्रातः ! सुमन्त्र !

क मे ज्येष्ठो रामः[2] —

नहि नहि युक्तमभिहितं मया ।

क ते ज्येष्ठो रामः प्रियसुत ! सुतः सा क दुहिता
विदेहानां भर्तुर्निरतिशयभक्तिर्गुरुजने ।
क वा सौमित्रिर्मां ‡हतपितृकमासन्नमरणं
किमप्याहुः किं ते सकलजनशोकार्णवकरम् ॥ १४ ॥

सुमन्त्रः — महाराज ! मा मैवममङ्गलवचनानि भाषिष्ठाः । अचिरादेव तान् द्रक्ष्यसि ।

राजा — सत्यमयुक्तमभिहितं मया । नायं तपस्विनामुचितः प्रश्नः । तत् कथ्यताम् । अपि तपस्विनां तपो वर्धते । अप्यरण्यानि स्वाधीनानि विचरन्ती वैदेही न परिखिद्यते ।

सुमित्रा — (क) सुमन्त ! बहुवक्कळाळङ्किदसरीरा वाळा

(क) सुमन्त्र ! बहुवल्कलालङ्कृतशरीरा बालाप्यबालचारित्रा भर्तुः सहधर्मचा-

१. '(पगम्य)' क. ग. ङ. पाठः. २. 'मः प्रि' ग. पाठः.

‡ हतः पिता हतपिता । ततो भूयः कुत्सायां कन् ।

वि अवाळच्चारित्ता भत्तुणो सहधम्मआरिणी[1] अह्मे महाराअं च किञ्चि णाळवदि ।

सुमन्त्रः — सर्व एव महाराजम् ।

राजा — न न । श्रोत्ररसायनैर्मम हृदयातुरौषधैस्तेषां नामधेयैरेव श्रावय ।

सुमन्त्रः — यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

राजा — राम इति । अयं रामः । तन्नामश्रवणात्[2] स्पृष्ट इव मे प्रतिभाति । ततस्ततः ।

सुमन्त्रः — आयुष्मान् लक्ष्मणः ।

राजा[3] — अयं लक्ष्मणः । ततस्ततः ।

सुमन्त्रः — आयुष्मती[4] सीता जनकराजपुत्री ।

राजा — इयं वैदेही । रामो लक्ष्मणो वैदेहीत्ययमक्रमः ।

सुमन्त्रः — अथ कः क्रमः ।

---

रिणी अस्मान् महाराजं च किञ्चिन्नालपति ।

---

१. 'णी किं अ' ग. पाठः. २. 'णादेव स्पृ' ख. ग., 'णादेव दृष्ट' ङ., 'णादेव श्लिष्ट' क. पाठः. ३. 'जा—लक्ष्मण इति । अ' ग. पाठः. ४. 'ती ज' ग. पाठः.

**राजा** — रामो वैदेही लक्ष्मण इत्यभिधीयताम् ।

रामलक्ष्मणयोर्मध्ये तिष्ठत्वत्रापि मैथिली ।
बहुदोषाण्यरण्यानि सनाथैषा भविष्यति ॥ १५ ॥

**सुमन्त्रः** — यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

**राजा** — अयं रामः ।

**सुमन्त्रः** — आयुष्मती जनकराजपुत्री ।

**राजा** — इयं वैदेही ।

**सुमन्त्रः** — आयुष्मान् लक्ष्मणः ।

**राजा** — अयं लक्ष्मणः । राम! वैदेहि! लक्ष्मण! परिष्वजध्वं[1] मां पुत्रकाः! ।

सकृत् स्पृशामि वा रामं सकृत् पश्यामि वा पुनः ।
गतायुरमृतेनेव जीवामीति मतिर्मम ॥ १६ ॥

**सुमन्त्रः** — शृङ्गिबेरपुरे रथादवतीर्यायोध्याभिमुखाः स्थित्वा सर्वे एव महाराजं शिरसा प्रणम्य विज्ञापयितुमारब्धाः ।

कमप्यर्थं चिरं ध्यात्वा वक्तुं प्रस्फुरिताधराः ।
बाष्पस्तम्भितकण्ठत्वादनुक्त्वैव वनं गताः ॥ १७ ॥

**राजा** — कथमनुक्त्वैव वनं गताः । (इति द्विगुणं मोहमुपगतः)

---

१. 'त' क. ख. पाठः.

**सुमन्त्रः** — (ससम्भ्रमम्) बालाके! उच्यताममात्येभ्यः— अप्रतीकारायां दशायां वर्तते महाराज इति ।

**काञ्चुकीयः** — तथा । (निष्क्रान्तः)

**देव्यौ**[1] — (क) महाराअ! समस्ससिहि समस्ससिहि ।

**राजा** — (किञ्चित् समाश्वस्य)

अङ्गं मे स्पृश कौसल्ये! न त्वां पश्यामि चक्षुषा ।
रामं प्रति गता बुद्धिरद्यापि न निवर्तते ॥ १८ ॥

पुत्र! राम! यत् खलु मया सन्ततं चिन्तितं,

राज्ये त्वामभिषिच्य सन्नरपतेर्लाभात् कृतार्थाः प्रजाः
कृत्वा त्वत्सहजान् समानविभवान् कुर्वात्मनः सन्ततम् ।
इत्यादिश्य च ते तपोवनमितो गन्तव्यमित्येतया
कैकेय्या हि तदन्यथा कृतमहो निःशेषमेकक्षणे ॥ १९ ॥

सुमन्त्र! उच्यतां कैकेय्याः—

गतो रामः प्रियं तेऽस्तु त्यक्तोऽहमपि जीवितैः ।
क्षिप्रमानीयतां पुत्रः पापं सफलमस्त्विति ॥ २० ॥

**सुमन्त्रः** — यदाज्ञापयति महाराजः ।

---

(क) महाराज! समाश्वसिहि समाश्वसिहि ।

---

१. सुमन्त्रः —'महाराज! किञ्चित् समाश्वसिहि समाश्वसिहि ।' ख. पाठः.

**राजा** — (ऊर्ध्वमवलोक्य) अये रामकथाश्रवणसन्दग्धहृदयं मामाश्वासयितुमागताः पितरः । कोऽत्र ।

(प्रविश्य)

**काञ्चुकीयः** — जयतु महाराजः ।

**राजा** — आपस्तावत् ।

**काञ्चुकीयः** — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । इमा आपः ।

**राजा** — (आचम्यावलोक्य)

अयममरपतेः सखा दिलीपो
रघुरयमत्रभवानजः पिता मे ।
कि[1]मभिगमनकारणं भवद्भिः
सह वसने समयो ममापि त[2]त्रे ॥ २१ ॥

[3]राम ! वैदेहि ! लक्ष्मण ! अहमितः पि[4]तॄणां सकाशं गच्छामि । हे पितरः ! अयमयमागच्छामि । (मू[5]र्छया परामृष्टः)

(काञ्चुकीयो यवनिकास्तरणं करोति)

**सर्वे** — हा [6]हा महाराजः । (क) हा हा महाराओ ।

(निष्क्रान्ताः सर्वे)

द्वितीयोऽङ्कः ।

---

(क) हा हा महाराजः ।

---

१. 'मिह ग' ग. ङ. पाठः. २. 'त्र । हे पितरः ! अय' क. ख. पाठः. ३. 'पुत्र राम ! वत्स लक्ष्मण ! वधु वैदेहि ! अ' ख. पाठः. ४. 'ननुग' ग. ङ. पाठः. ५. '(स्वर्यातः)' ख., '(स्वर्गं गतः)' क. पाठः. ६. 'हा महाराओ । (यवनिकास्तरणं करोति) (नि' ख. पाठः.

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति सुधाकारः)

**सुधाकारः** — (सम्मार्जनादीनि कृत्वा) (क) भोदु, दाणि किदं एत्थ कय्यं अय्यसम्भवअस्स† आणत्तं । जाव मुहुत्तं सुविस्सं । (स्वपिति)

(प्रविश्य)

**भटः** — (चेटमुपगम्य ताडयित्वा) (ख) अह्गो दासीएपुत्त! किं दाणि कम्मं ण करेसि । (ताडयति)

**सुधाकारः** — (बुद्ध्वा) (ग) ताळेहि मं ताळेहि मं ।

**भटः** — (घ) ताडिदे तुवं किं करिस्ससि ।

**सुधाकारः** — (ङ) अहण्णस्स मम कत्तवीअस्स विअ बाहुसहस्सं णत्थि ।

---

(क) भवतु, इदानीं कृतमत्र कार्यमार्यसंभवकस्याज्ञप्तम् । यावन्मुहूर्तं स्वप्स्यामि ।

(ख) अह्गो दास्याःपुत्र! किमिदानीं कर्म न करोषि ।

(ग) ताडय मां ताडय माम् ।

(घ) ताडिते त्वं किं करिष्यसि ।

(ङ) अधन्यस्य मम कार्तवीर्यस्येव बाहुसहस्रं नास्ति ।

---

† स्वप्रवासवदत्ते पद्मावतीभटः सम्भषकनाम्ना व्यवहृतः ।

**भटः** — (क) बाहुसहस्सेण किं कय्यं ।

**सुधाकारः** — (ख) तुमं हणिस्सं ।

**भटः** — (ग) एहि दासीएपुत्त ! मुदे मुञ्चिस्सं । (पुनरपि ताडयति)

**सुधाकारः** — (रुदित्वा) (घ) सक्कं दाणि भट्टा ! मे अवराहं जाणिदुं ।

**भटः** — (ङ) णत्थि किळ अवराहो णत्थि । णं[1] मए सन्दिट्ठो भट्टिदारअस्स रामस्स रज्जविब्भट्ठकिदसन्दावेण सग्गं गदस्स भाट्टिणो दसरहस्स पडिमागेहं देट्ठुं अज्ज कोसळ्ळापुरोएहि सव्वेहि अन्तेउरेहि इह आअन्तव्वं त्ति । एत्थ दाणि तुए किं किदं ।

**सुधाकारः** — (च) पेक्खदु भट्टा अवणीदकवोदसन्दा-

(क) बाहुसहस्रेण किं कार्यम् ।

(ख) त्वां हनिष्यामि ।

(ग) एहि दास्याःपुत्र ! मृते मोक्ष्यामि ।

(घ) शक्यमिदानीं भर्तः ! मेऽपराधं ज्ञातुम् ।

(ङ) नास्ति किलापराधो नास्ति । ननु मया सन्दिष्टो भर्तृदारकस्य रामस्य राज्यविभ्रष्टकृतसन्तापेन स्वर्गं गतस्य भर्तुर्दशरथस्य प्रतिमागेहं द्रष्टुमद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैरिहागन्तव्यमिति । अत्रेदानीं त्वया किं कृतम् ।

(च) पश्यतु भर्ता अपनीतकपोतसन्दानकं तावद् गर्भगृहम् । सौधवर्णकदत्त-

१. 'णं एत्थ दाणि म' ग., 'एत्थ दाणि म' क. ख. पाठः.

णअं दाव गब्भगिहं। सोहवण्णअदुत्तचन्दणपञ्चाङ्गुळा भित्ती-ओ। ओसत्तमळ्ळदामसोहीणि दुवाराणि। पइण्णा वाळुआ। एत्थ दाणि मए किं ण किदं।

**भटः**—(क) जइ एवं, विस्सत्थो गच्छ। जाव अहं वि सव्वं किदं त्ति अमच्चस्स णिवेदेमि।

(निष्क्रान्तौ)

(प्रवेशकः)

---

(ततः प्रविशति भरतो रथेन सूतश्च)

**भरतः**— (सावेगम्) सूत! चिरं मातुल(कुल)परिचयादविज्ञातवृत्तान्तोऽस्मि। श्रुतं मया दृढमकल्यशरीरो[3] महाराज इति। तदुच्यतां,

पितुर्मे को व्याधिः

**सूतः**[4] —

हृदयपरितापः खलु महान्

**भरतः**—

किमाहुस्तं वैद्याः

**सूतः**—

न खलु भिषजस्तत्र निपुणाः।

---

चन्दनपञ्चाङ्गुला भित्तयः। अवसक्तमाल्यदामशोभीनि द्वाराणि। प्रकीर्णा वालुकाः। अत्रेदानीं मया किं न कृतम्।

(क) यद्येवं, विश्वस्तो गच्छ। यावदहमपि सर्वं कृतमित्यमात्याय निवेदयामि।

---

१. 'धवण्णिणु द' क. पाठः. २. 'तेन च )' क. ख. पाठः. ३. 'रो राजेति' ख. पाठः. ४. 'तः—आयुष्मन्! हृ' ग. ङ. पाठः.

भरतः —

किमाहारं भुङ्क्ते शयनमपि

सूतः —

भूमौ निरशनः

भरतः —

किमाशा[1] स्याद्

सूतः —

दैवं

भरतः —

स्फुरति हृदयं वाहय रथम् ॥ १ ॥

सूतः — यदाज्ञापयत्यायुष्मान् । (रथं वाहयति)[2]

भरतः — (रथवेगं निरूप्य) अहो[3] तु खलु रथवेगः । एते ते,

द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया
नदीवोद्वृत्ताम्बुर्निपतति मही नेमिविवरे ।
अरव्यक्तिर्नष्टा स्थितमिव जवाच्चक्रवलयं
रजश्चाश्वोद्भूतं पतति पुरतो नानुपतति ॥ २ ॥

सूतः — आयुष्मन्[4] ! सोपस्नेहतया वृक्षाणामभितः खल्वयोध्यया भवितव्यम् ।

---

१. 'शास्यं दे' ख. पाठः. २. 'चोदयति)' ग. ङ. पाठः. ३. 'हो र' ङ. पाठः. ४. 'न् ! अन्य इवोपस्नेहेन वृ' ख. ग. पाठः.

**भरतः** —अहोतुखलु स्वजनदर्शनोत्सुकस्य त्वरता मे मनसः । सम्प्रति हि,

पतितमिव शिरः पितुः पादयोः स्निह्यतेवास्मि
राज्ञा समुत्थापितः
त्वरितमुपगता इव भ्रातरः क्लेदयन्तीव मा-
मश्रुभिर्मातरः ।
सदृश इति महानिति व्यायतश्चेति भृत्यैरिवाहं
स्तुतः सेवया
परिहसितमिवात्मनस्तत्र पश्यामि वेषं च
भाषां च सौमित्रिणा ॥ ३ ॥

**सूतः** —(आत्मगतम्) भोः ! कष्टम्, यदयमविज्ञाय महाराजविनाशमुदर्के निष्फलामाशां परिवहन्नयोध्यां प्रवेक्ष्यति कुमारः । जानद्भिरप्यस्माभिर्न निवेद्यते । कुतः,

पितुः प्राणपरित्यागं मातुरैश्वर्यलुब्धताम् ।
ज्येष्ठभ्रातुः प्रवासं च त्रीन् दोषान् कोऽभिधास्यति ॥ ४ ॥

(प्रविश्य)

**भटः** — जयतु कुमारः ।

**भरतः** — भद्र ! किं शत्रुघ्नो मामभिगतः ।

**भटः** — अभि(ग)तः खलु वर्तते कुमारः । उपाध्यायास्तु भवन्तमाहुः ।

**भरतः** — किमिति किमिति।

**भटः** — एकनाडिकावशेषः कृत्तिकाविषयः। तस्मात् प्रतिपन्नायामेव रोहिण्यामयोध्यां प्रवेक्ष्यति कुमारः।

**भरतः** — बाढमेवम्। न मया गुरुवचनमतिक्रान्तपूर्वम्। गच्छ त्वम्।

**भटः** — यदाज्ञापयति कुमारः। (निष्क्रान्तः)

**भरतः** — अथ कस्मिन् प्रदेशे विश्रमिष्ये। भवतु, दृष्टम्। एतस्मिन् वृक्षान्तराविष्कृते देवकुले मुहूर्तं विश्रमिष्ये। तदुभयं भविष्यति दैवतपूजा विश्रमश्च। अथच उपोपविश्य प्रवेष्टव्यानि नगराणीति सत्समुदाचारः। तस्मात् स्थाप्यतां रथः।

**सूतः** — यदाज्ञापयत्यायुष्मान्। (रथं स्थापयति)

**भरतः** — (रथादवतीर्य) सूत! एकान्ते विश्रामयाश्वान्।

**सूतः** — यदाज्ञापयत्यायुष्मान्। (निष्क्रान्तः)

**भरतः** — (किञ्चिद् गत्वावलोक्य)[1] साधुमुक्तपुष्पलाजाविष्कृता बलयः, दत्तचन्दनपञ्चाङ्गुला भित्तयः, अवसक्तमाल्यदामशोभीनि द्वाराणि, प्रकीर्णा वालुकाः। किन्नुखलु पार्वणोऽयं विशेषः,

---

१. 'प्रविश्याव' ख. घ., 'विलो' क., 'उपगम्य)' ङ. पाठः.

अथवा आह्निकमास्तिक्यम्। कस्यनुखलु दैवतस्य स्थानं भविष्यति । नेह किञ्चित् प्रहरणं ध्वजो वा बहिश्चिह्नं दृश्यते । भवतु, प्रविश्य ज्ञास्ये । (प्रविश्यावलोक्य) अहो क्रियामाधुर्यं पाषाणानाम्। अहो भावगतिराकृतीनाम्। दैवतोद्दिष्टानामपि मानुषविश्वासतासां प्रतिमानाम् । किन्नुखलु चतुर्दैवतोऽयं स्तोमः।अथवा यानि [1] तानि भवन्तु। अस्ति तावन्मे मनसि प्रहर्षः [2]।

कामं दैवतमित्येव युक्तं नमयितुं शिरः ।
वार्षलस्तु प्रणामः स्यादमन्त्रार्चितदैवतः ॥ ५ ॥

(प्रविश्य)

देवकुलिकः — भोः ! नैत्यकावसाने प्राणिधर्ममनुतिष्ठति मयि कोनुखल्वयमासां प्रतिमानामल्पान्तराकृतिरिव प्रतिमागृहं प्रविष्टः । भवतु, प्रविश्य ज्ञास्ये । (प्रविशति)

भरतः — नमोऽस्तु ।

देवकुलिकः — नखलु नखलु प्रणामः कार्यः ।

भरतः — मा तावद् भोः !

*वक्तव्यं किञ्चिदस्मासु विशिष्टः प्रतिपाल्यते ।
किङ्कृतः प्रतिषेधोऽयं नियमप्रभविष्णुता ॥ ६ ॥

---

१. 'कानि' ग. पाठः. २. सादः ।' क. ग. ङ. पाठः.

---

* वक्तव्यं, प्रतिपाल्यते, नियमप्रभविष्णुना इत्येतेषु प्रश्नकाकुर्बोध्या ।

**देवकुलिकः** — न खल्वेतैः कारणैः प्रतिषेधयामि भवन्तम् । किन्तु दैवतशङ्कया ब्राह्मणजनस्य प्रणामं परिहरामि । क्षत्रिया ह्यत्रभवन्तः ।

**भरतः** — एवम् । क्षत्रिया ह्यत्रभवन्तः । अथ के नामात्रभवन्तः ।

**देवकुलिकः** — इक्ष्वाकवः ।

**भरतः** — (सहर्षम्) इक्ष्वाकव इति । एते तेऽयोध्याभर्तारः[1] ।

एते ते दैवतानामसुरपुरवधे गच्छन्त्यभिसरी-
मेते ते शक्रलोके सपुरजनपदा यान्ति स्वसुकृतैः ।
एते ते प्राप्नुवन्तः स्वभुजबलजितां कृत्स्नां वसुमती-
मेते ते मृत्युना ये चिरमनवसिताश्छन्दं मृगयता ॥ ७ ॥

भोः ! यदृच्छया खलु मया महत् फलमासादितम् । अभिधीयतां कस्तावदत्रभवान् ।

**देवकुलिकः** — अयं खलु तावत् सन्निहितसर्वरत्नस्य विश्वजितो यज्ञस्य प्रवर्तयिता[2] प्रज्वलितधर्मप्रदीपो दिलीपः ।

**भरतः** — नमोऽस्तु धर्मपरायणाय । अभिधीयतां कस्तावदत्रभवान् ।

---

१. 'पू' ख. पाठः. २. 'ता योक्ता प्र' ङ. पाठः.

देवकुलिकः — अयं खलु तावत् संवेशनोत्थापनयोरनेकब्राह्मणजनसहस्रप्रयुक्तपुण्याहशब्दरवो रघुः ।

भरतः — अहो बलवान् मृत्युरेतामपि रक्षामतिक्रान्तः । नमोऽस्तु ब्राह्मणजनावेदितराज्यफलाय । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः — अयं खलु तावत् प्रियावियोगनिर्वेदपरित्यक्तराज्यभारो नित्यावभृथस्नानप्रशान्तरजा अजः ।

भरतः — नमोऽस्तु श्लाघनीयपश्चात्तापाय । (दशरथस्य प्रतिमामवलोकयन् पर्याकुलो भूत्वा) भोः ! बहुमानव्याक्षिप्तेन मनसा सुव्यक्तं नावधारितम् । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः — अयं दिलीपः ।

भरतः — पितृपितामहो महाराजस्य । ततस्ततः ।

देवकुलिकः — अ[2]त्रभवान् रघुः ।

भरतः — पितामहो महाराजस्य । तत[3]स्ततः ।

देवकुलिकः — अत्रभवानजः ।

भरतः — पिता तातस्य । किमिति किमिति ।

देवकुलिकः — अयं दिलीपः, अयं रघुः, अयमजः ।

---

१. 'नोपधा' ग. ङ. पाठः. २. 'त' ख. पाठः. ३. 'तः' ख. घ. पाठः.

भरतः—भवन्तं किञ्चित् पृच्छामि। धरमाणानामपि प्रतिमा[1]ः स्थाप्यन्ते।

देवकुलिकः—न खलु, अतिक्रान्तानामेव।

भरतः—तेन ह्यापृच्छे भवन्तम्।

देवकुलिकः—तिष्ठ।

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः।
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसे* ॥ ८ ॥

भरतः—हा तात! (मूर्छितः पतति। पुनः प्रत्या[2]गत्य)

हृदय! भव सकामं यत्कृते शङ्कसे त्वं
शृणु पितृनिधनं ते गच्छ धैर्यं च तावत्।
स्पृशति तु यदि नीचो मामयं शुल्कशब्द-
स्त्वथच(?) भवति सत्यं यत्र देहो विशो[3]ध्यः ॥ ९ ॥

आर्य!।

देवकुलिकः—आर्येति, इक्ष्वाकुकुलालापः खल्वयम्। कच्चित् कैकेयीपुत्रो भरतो भवान् ननु।

भरतः—अथकिम् अथकिम्। दशरथपुत्रो भरतोऽस्मि, न कैकेय्याः।

---

१. 'मा स्थाप्यते।' ख. पाठः. २. 'त्यभिज्ञाय)' क. घ. पाटः. ३. 'ध्यः ॥ देवकुलिकः—समाश्वसिहि समाश्वसिहि। भरतः—(समाश्वस्य) आ' क. पाटः.

---

* पृच्छसीत्येव वा पाठो भवेत्।

देवकुलिकः — तेन ह्यापृच्छे भवन्तम् ।

भरतः — तिष्ठ । शेषमभिधीयताम् ।

देवकुलिकः — का गतिः । श्रूयताम्, उपरतस्तत्रभवान् दशरथः । सीतालक्ष्मणसहायस्य रामस्य वनगमनप्रयोजनं न जाने ।

भरतः — कथं कथम् आर्योऽपि वनं गतः । (द्विगुणं मोहमुपगतः)

देवकुलिकः — कुमार! समाश्वसिहि समाश्वसिहि ।

भरतः — (समाश्वस्य)

अयोध्यामटवीभूतां पित्रा भ्रात्रा च वर्जिताम् ।
पिपासार्तोऽनुधावामि क्षीणतोयां नदीमिव ॥ १० ॥

आर्य ! विस्तरश्रवणं मे मनसः स्थैर्यमुत्पादयति । तत् सर्वमनवशेषमभिधीयताम् ।

देवकुलिकः — श्रूयतां, तत्रभवता राज्ञाभिषिच्यमाने तत्रभवति रामे भवतो जनन्याभिहितं किल ।

भरतः — तिष्ठ ।

तं स्मृत्वा शुल्कदोषं भवतु मम सुतो राजेत्यभिहितं
तद्धैर्येणाश्वसत्या व्रज सुत ! वनमित्यार्योऽप्यभिहितः ।

तं दृष्ट्वा बद्धचीरं निधनमसदृशं राजा ननु गतः
पाल्यन्ते धिक् प्रलापा ननु मयि सदृशाः शेषाः प्रकृतिभिः॥११॥

(मोहमुपगतः)[1]

(नेपथ्ये)

(क) उस्सरह अय्या ! उस्सरह[2] ।

देवकुलिकः — (विलोक्य) अये,

काले खल्वागता देव्यः पुत्रे मोहमुपागते ।
हस्तस्पर्शो हि मातॄणामजलः* सजलाञ्जलिः ॥ १२ ॥

(ततः प्रविशन्ति[3] देव्यः सुमन्त्रश्च)

सुमन्त्रः — इत इतो भवत्यः ।

इदं गृहं तत् प्रतिमानृपस्य नः
समुच्छ्रयो यस्य स हर्म्यदुर्लभः ।
अयन्त्रितैरप्रतिहारिकागतै-
र्विना प्रणामं पथिकैरुपास्यते ॥ १३ ॥

---

(क) उत्सरतार्याः ! उत्सरत ।

---

१. '(इति सन्तापात् पतति)' घ. पाठः. २. 'ह अय्या !' घ. पाठः. ३. 'ति सुमन्त्रो देव्यश्च' घ. पाठः.

---

* 'अजलस्य जलाञ्जलिः' इति चतुर्थः पादः पठनीयो भाति ।

(प्रविश्यावलोक्य)[1] भवत्यः! नखलु नखलु प्रवेष्टव्यम् ।

अयं हि पतितः कोऽपि वयस्स्थ इव पार्थिवः ।

देवकुलिकः—

परशङ्कामलं कर्तुं गृह्यतां भरतो ह्ययम् ॥ १४ ॥

(निष्क्रान्तः)[2]

देव्यः — (सहसोपगम्य) (क) हा जाद[3]! भरद! ।

भरतः — (किञ्चित् समाश्वस्य) आर्य! ।

सुमन्त्रः — जयतु महा (इत्यर्धोक्ते सविषादम्) अहो स्वरसादृश्यम् । मन्ये प्रतिमास्थो महाराजो व्याहरतीति ।

भरतः[4] — अथ मातॄणामिदानीं कावस्था ।

[5]देव्यः — (ख) जाद! एसा णो अवत्था[6] । (अवगुण्ठनमपनयन्ति)

---

(क) हा जात! भरत! ।

(ख) जात! एषा नोऽवस्था ।

---

१. 'श्य तं दृष्ट्वा) घ. पाठः. २. 'न्तो देवकुलिकः) सर्वाः — हा' क. पाठः. ३. 'द!।' क. ग. ङ. पाठः. ४. तः — 'मातरः! इदा' क. ख. पाठः. ५. 'सर्वाः — (अवगुण्ठनमपनीय) जा' क. घ. पाठः. ६. 'स्था। (इति रुदन्ति)' क. पाठः.

**सुमन्त्रः** — भवत्यः ! निगृह्यतामुत्कण्ठा ।

**भरतः** — (सुमन्त्रं विलोक्य) सर्वसमुदाचारसन्निकर्षस्तु मां सूचयति । कच्चित् तात ! सुमन्त्रो भवान् ननु ।

**सुमन्त्रः** — कुमार ! अथकिम् । सुमन्त्रोऽस्मि ।

अन्वास्यमानश्चिरजीवदोषैः
कृतघ्नभावेन विडम्बमानः[1] ।
अहं हि तस्मिन् नृपतौ विपन्ने
जीवामि शून्यस्य रथस्य सूतः ॥ १५ ॥

**भरतः** — हा तात ! (उत्थाय) तात ! अभिवादनक्रममुपदेष्टुमिच्छामि मातॄणाम् ।

**सुमन्त्रः** — बाढम् । इयं तत्रभवतो रामस्य जननी देवी कौसल्या ।

**भरतः** — अम्ब ! अनपराद्धोऽहमभिवादये ।

**कौसल्या** — (क) जाद ! णिस्सन्दावो होहि ।

**भरतः** — (आत्मगतम्) आक्रुष्ट इवास्म्यनेन । (प्रकाशम्) अनुगृहीतोऽस्मि । ततस्ततः ।

---

(क) जात ! निःसन्तापो भव ।

---

१. 'रु' क. ख. ग. पाठः.

**सुमन्त्रः** — इयं तत्रभवतो लक्ष्मणस्य जननी देवी सुमित्रा ।

**भरतः** — अम्ब ! लक्ष्मणेन §अतिसन्धितोऽहमभिवादये।

**सुमित्रा** — (क) जाद ! जसोभाई होहि ।

**भरतः**[1] — अम्ब ! इदं प्रयतिष्ये[2] । अनुगृहीतोऽस्मि ततस्ततः ।

**सुमन्त्रः** — इयं ते जननी ।

**भरतः**[3] — (सरोषम् उत्थाय) आः पापे !

मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।
गङ्गायमुनयोर्मध्ये कुनदीव प्रवेशिता ॥ १६ ॥

**कैकेयी** — (ख) जाद ! किं मए किदं ।

**भरतः** — किं कृतमिति वदसि ।

वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।

---

(क) जात ! यशोभागी भव ।
(ख) जात ! किं मया कृतम् ।

---

१. 'तः—(आत्मगतम्) इ' क. पाठः. २. 'ष्ये । (प्रकाशम्) अ' क. पाठः. ३. 'तः—आः' क. ग. घ. पाठः.

---

§ 'अतिसंहित' इति वा पाठः स्यात् ।

दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमै-
र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥ १७ ॥

**कौसल्या** — (क) जाद ! सव्वसमुदाआरमज्झत्थो किं ण वन्दसि मादरं ।

**भरतः** — मातरमिति । अम्ब ! त्वमेव मे माता । अम्ब ! अभिवादये ।

**कौसल्या** — (ख) णहि णहि । इअं दे जणणी ।

**भरतः** — आसीत् पुरा । न त्विदानीम् । पश्यतु भवती,

त्यक्त्वा स्नेहं शीलसङ्क्रान्तदोषैः
पुत्रास्तावन्नन्वपुत्राः क्रियन्ते ।
लोके पूर्वं स्थापयाम्येष धर्मं
भर्तृद्रोहादस्तु माताप्यमाता ॥ १८ ॥

**कैकेयी** — (ग) जाद ! महाराअस्स सच्चवअणं रक्खन्तीए मए तह उत्तं ।

**भरतः** — किमिति किमिति ।

---

(क) जात सर्वसमुदाचारमध्यस्थः किं न वन्दसे मातरम् ।

(ख) नहि नहि । इयं ते जननी ।

(ग) जात ! महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम् ।

**कैकेयी** — (क) पुत्तओ मे राआ होदु त्ति।

**भरतः** — अथ स इदानीमार्योऽपि भवत्याः कः।

पितुर्मे नौरसः पुत्रो न क्रमेणाभिषिच्यते।
दयिता भ्रातरो न स्युः प्रकृतीनां न रोचते*॥ १९॥

**कैकेयी** — (ख) जाद! सुक्कलुद्धा णणु पुच्छिदव्वा।

**भरतः** —

वल्कलैर्हृतराजश्रीः पदातिः सह भार्यया।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम्॥ २०॥

**कैकेयी** — (ग) जाद! देसकाळे णिवेदेमि।

**भरतः** —

अयशसि यदि लोभः कीर्तयित्वा किमस्मान्
किमु नृपफलतर्षः किं नरेन्द्रो न दद्यात्।
अथ तु नृपतिमातेत्येष शब्दस्तवेष्टो
वदतु भवति! सत्यं किं तवार्यो न पुत्रः॥ २१॥

कष्टं कृतं भवत्या,

---

(क) पुत्रको मे राजा भवत्विति।

(ख) जात! शुल्कलुब्धा ननु प्रष्टव्या:।

(ग) जात! देशकाले निवेदयामि।

---

* अत्र चतुर्षु वाक्येषु प्रश्नकाकुर्बोद्धव्या।

त्वया राज्यैषिण्या नृपतिरसुभिर्नैव गणितः
सुतं ज्येष्ठं च त्वं व्रज वनमिति प्रेषितवती ।
न शीर्णं यद् दृष्ट्वा जनकतनयां वल्कलवती-
महो धात्रा सृष्टं भवति! हृदयं वज्रकठिनम् ॥ २२ ॥

**सुमन्त्रः** — कुमार ! एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य भवन्तं प्रत्युद्गतौ विज्ञापयतः ।

गोपहीना यथा गावो विलयं यान्त्यपालिताः ।
एवं नृपतिहीना हि विलयं यान्ति वै प्रजाः ॥ २३ ॥

**भरतः** — अनुगच्छन्तु मां प्रकृतयः ।

**सुमन्त्रः** — अभिषेकं विसृज्य क्व भवान् यास्यति ।

**भरतः** — अभिषेकमिति । इहात्रभवते प्रदीयताम् ।

**सुमन्त्रः** — क्व भवान् यास्यति ।

**भरतः** —

तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः॥ २४ ॥

(निष्क्रान्ताः सर्वे)

तृतीयोऽङ्कः ।

---

१. 'सुरभि' ख. पाठः.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशतश्चेट्यौ)

**विजया** — (क) हळा णन्दिणिए ! भणेहि भणेहि । अज्ज कोसळ्ळापुरोगेहि सव्वेहि अन्तेवुरेहि पडिमागेहं दट्ठुं गदेहि तहिं किळ भट्टिदारओ भरदो दिट्ठो । अहं च मन्दभाआ दुवारे ट्ठिदा ।

**नन्दिनिका** — (ख) हळा ! दिट्ठो अह्मेहि कोदूहळेण भट्टिदारओ भरदो ।

**विजया** — (ग) भट्टिणी कुमारेण किं भणिदा ।

**नन्दिनिका** — (घ) किं भणिदं । ओळोइदुं वि णेच्छदि कुमारो ।

---

(क) हला नन्दिनिके ! भण भण । अद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैः प्रतिमागेहं द्रष्टुं गतैस्तत्र किल भर्तृदारको भरतो दृष्टः । अहं च मन्दभागा द्वारे स्थिता ।

(ख) हला ! दृष्टोऽस्माभिः कौतूहलेन भर्तृदारको भरतः ।

(ग) भट्टिनी कुमारेण किं भणिता ।

(घ) किं भणितम् । अवलोकितुमपि नेच्छति कुमारः ।

विजया — (क) अहो अच्चाहिदं । रज्जलुद्धाए भट्टिदारअस्स रामस्स रज्जविब्भट्ठं करन्तीए अत्तणो वेहव्वं आदिट्ठं । लोओ वि विणासं गमिओ । णिग्घिणा हु भट्टिणी । पापअं किदं ।

नान्दिनिका — (ख) हळा ! सुणाहि, पइदीहि आणीदं अभिसेअं विसज्जिअ रामतवोवणं गदो कुमारो ।

विजया — (सविषादम्) (ग) हं एवं गदो कुमारो । णन्दिणिए ! एहि, अह्मे भट्टिणिं पेक्खामो ।

(निष्क्रान्ते)

प्रवेशकः ।

---

(ततः प्रविशति भरतो रथेन सुमन्त्रः सूतश्च)

भरतः —

स्वर्गं गते नरपतौ सुकृतानुयात्रे[1]
पौराश्रुपातसलिलैरनुगम्यमानः ।

---

(क) अहो अत्याहितम् । राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्यात्मनो वैधव्यमादिष्टम् । लोकोऽपि विनाशं गमितः । निर्घृणा खलु भट्टिनी । पापकं कृतम् ।

(ख) हला ! शृणु, प्रकृतिभिरानीतमभिषेकं विसृज्य रामतपोवनं गतः कुमारः ।

(ग) हम् एवं गतः कुमारः । नन्दिनिके ! एह्यावां भट्टिनीं पश्यावः ।

---

१. 'यात्रैः' ख. पाठः.

द्रष्टुं प्रयाम्यकृपणेषु तपोवनेषु
रामाभिधानमपरं जगतः शशाङ्कम् ॥ १ ॥

**सुमन्त्रः**— एष एष आयुष्मान् भरतः,

दैत्येन्द्रमानमथनस्य नृपस्य पुत्रो
यज्ञोपयुक्तविभवस्य नृपस्य पौत्रः।
भ्राता पितुः प्रियकरस्य जगत्प्रियस्य
रामस्य रामसदृशेन पथा प्रयाति ॥ २ ॥

**भरतः**— भोस्तात!।

**सुमन्त्रः**— कुमार! अयमस्मि।

**भरतः**— क्व तत्रभवान् ममार्यो रामः। क्वासौ महाराजस्य प्रतिनिधिः। क्व सन्निदर्शनं सारवताम्। क्वासौ प्रत्यादेशो राज्यलुब्धायाः कैकेय्याः। क्व तत् पात्रं यशसः। क्वासौ नरपतेः पुत्रः। क्वासौ सत्यमनुव्रतः।

मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता।
तमहं द्रष्टुमिच्छामि दैवतं परमं मम ॥ ३ ॥

**सुमन्त्रः**— कुमार! एतस्मिन्नाश्रमपदे।

अत्र रामश्च सीता च लक्ष्मणश्च महायशाः।
सत्यं शीलं च भक्तिश्च येषु विग्रहवत् स्थि(तो[1]तम्) ॥ ४ ॥

---

१. 'ताः' ख. ग. घ. पाठः.

भरतः — तेन हि स्थाप्यतां रथः।

सूतः — यदाज्ञापयत्यायुष्मान्। (तथा करोति)

भरतः — (रथादवतीर्य) सूत! एकान्ते विश्रामयाश्वान्।

सूतः — यदाज्ञापयत्यायुष्मान्। (निष्क्रान्तः)

भरतः — भोस्तात! निवेद्यतां निवेद्यताम्।

सुमन्त्रः — कुमार! किमिति निवेद्यते।

भरतः — राज्यलुब्धायाः कैकेय्याः पुत्रो भरतः प्राप्त इति।

सुमन्त्रः — कुमार! अलं गुरुजनापवादमभिधातुम्।

भरतः — सुष्ठु, न न्याय्यं परदोषमभिधातुम्। तेन हि उच्यतामिक्ष्वाकुकुलन्यङ्गभूतो भरतो दर्शनमभिलषतीति।

सुमन्त्रः — कुमार! नाहमेवं वक्तुं समर्थः। अथ पुनर्भरतः प्राप्त इति ब्रूयाम्।

भरतः — न न। नाम केवलमभिधीयमानमकृतप्रायश्चित्तमिव मे[1] प्रतिभाति[2]। किं ब्रह्मघ्नानामपि परेण निवेदनं क्रियते। तस्मात् तिष्ठतु तातः। अहमेव निवेदयिष्ये। भो भो! निवेद्यतां

---

१. 'मां प्र' घ. पाठः. २. 'ति। न पुनर्ब्रह्म' ख. पाठः.

निवेद्यतां तत्रभवते पितृवचनकराय राघवाय,

निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः ।
भक्तिमानागतः कश्चित् कथं तिष्ठतु यात्विति ॥ ५ ॥

(ततः प्रविशति रामः सीतालक्ष्मणाभ्याम्)

**रामः** — (आकर्ण्य सहर्षम्) सौमित्रे ! किं शृणोषि । अयि विदेहराजपुत्रि ! त्वमपि शृणोषि ।

कस्यासौ सदृशतरः स्वरः पितुर्मे
गाम्भीर्यात् परिभवतीव मेघनादम् ।
यः कुर्वन् मम हृदयस्य बन्धुशङ्कां
सस्नेहं[1] श्रुतिपथमिष्टतः प्रविष्टः ॥ ६ ॥

**लक्ष्मणः** — आर्य ! ममापि खल्वेष स्वरसंयोगो बन्धुजनबहुमानमावहति । एष हि,

घनः स्पष्टो धीरः समदवृषभस्निग्धमधुरः
कलः कण्ठे वक्षस्यनुपहतसञ्चाररभसः ।
यथास्थानं प्राप्य स्फुटकरणनानाक्षरतया
चतुर्णां वर्णानामभयमिव दातुं व्यवसितः ॥ ७ ॥

**रामः** — सर्वथा नायमबान्धवस्य स्वरसंयोगः । क्लेदयतीव मे हृदयम् । वत्स ! लक्ष्मण ! दृश्यतां तावत् ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः । (परिक्रामति)

---

१. 'हं श्रु' घ. पाठः.

**भरतः**—अये कथं न कश्चित् प्रतिवचनं प्रयच्छति। किन्नुखलु विज्ञातोऽस्मि कैकेय्याः पुत्रो भरतः प्राप्त इति।

**लक्ष्मणः**—(विलोक्य) अये अयमार्यो रामः। न न। रूपसादृश्यम्।

मुखमनुपमं त्वार्यास्याभं शशाङ्कमनोहरं
मम पितृसमं पीनं वक्षः सुरारिशरक्षतम्।
द्युतिपरिवृतस्तेजोराशिर्जगत्प्रियदर्शनो
नरपतिरयं देवेन्द्रो वा स्वयं मधुसूदनः॥ ८॥

(सुमन्त्रं दृष्ट्वा) अये तातः।

**सुमन्त्रः**—अये कुमारो लक्ष्मणः।

**भरतः**—एवं गुरुरयम्। आर्य! अभिवादये।

**लक्ष्मणः**—एह्येहि। आयुष्मान् भव। (सुमन्त्रं वीक्ष्य) तात! कोऽत्रभवान्।

**सुमन्त्रः**—कुमार!

रघोश्चतुर्थोऽयमजात् तृतीयः
पितुः प्रकाशस्य तव द्वितीयः।
यस्यानुजस्त्वं स्वकुलस्य केतो-
स्तस्यानुजोऽयं भरतः कुमारः॥ ९॥

---

१. 'पीपु' ख. पाठः.

लक्ष्मणः — एह्येहीक्ष्वाकुकुमार[1] ! वत्स ! स्वस्त्यायुष्मान् भव ।

अयसुरसमरदक्षैर्वज्रसंघृष्टचापै-
रनुपमबलवीर्यैः स्वैः कुलैस्तुल्यवीर्यः ।
रघुरिव स नरेन्द्रो यज्ञविश्रान्तकोशो
भव जगति गुणानां भाजनं भ्राजितानाम् ॥ १० ॥

भरतः — अनुगृहीतोऽस्मि ।

लक्ष्मणः — कुमार ! इह तिष्ठ । त्वदागमनमार्याय निवेदयामि ।

भरतः — आर्य ! अचिरमिदानीमभिवादयितुमिच्छामि । शीघ्रं निवेद्यताम् ।

लक्ष्मणः — बाढम् । (उपेत्य) जयत्वार्यः । आर्य !

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः ।
संक्रान्तं यत्र ते रूपमादर्शे इव तिष्ठति ॥ ११ ॥

रामः — वत्स ! लक्ष्मण ! किमेवं भरतः प्राप्तः ।

लक्ष्मणः — आर्य ! अथकिम् ।

रामः — मैथिलि ! भरतावलोकनार्थं विशालीक्रियतां ते चक्षुः ।

---

१. 'र ! । असु' घ. पाठः.

**सीता** — (क) अय्यउत्त! किं भरदो आअदो ।

**रामः** — मैथिलि! अथकिम् ।

अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम् ।
कीदृशस्तनयस्नेहो भ्रातृस्नेहोऽयमीदृशः ॥ १२ ॥

**लक्ष्मणः** — आर्य! किं प्रविशतु कुमारः ।

**रामः** — वत्स! लक्ष्मण! इदमपि* तावदात्माभिप्रायमनुवर्तयितुमिच्छसि[१] । गच्छ सत्कृत्य शीघ्रं प्रवेश्यतां कुमारः ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः ।

**रामः** — अथवा तिष्ठ त्वम् ,

इयं स्वयं गच्छतु मानहेतो-
मतिव भावं तनये निवेश्य ।
तुषारपूर्णोत्पलपत्रनेत्रा
हर्षास्रमासारमिवोत्सृजन्ती ॥ १३ ॥

**सीता** — (ख) जं अय्यउत्तो आणवेदि । (उत्थाय परिक्रम्य भरतमवलोक्य) हं[२] तदो तं वेळं दाणि णिक्कन्तो अय्यउत्तो । णहि

(क) आर्यपुत्र! किं भरत आगतः ।

(ख) यदार्यपुत्र आज्ञापयति । हं ततस्तां वेलामिदानीं निष्क्रान्त आर्यपुत्रः ।

१. 'सि । शीघ्रं प्रवेश्यताम् ।' ख., 'सि । गच्छ, शी' ख. ग. पाठः. २ 'ह तं' ग. पाठः.

* इदमपि भरतप्रवेशनमपि ।

णहि । रूवसादिस्सं ।

**सुमन्त्रः** — अये वधूः[1] ।

**भरतः** — अये इयमत्रभवती जनकराजपुत्री ।

इदं तत् स्त्रीमयं तेजो जातं क्षेत्रोदराद्धलात् ।
जनकस्य नृपेन्द्रस्य तपसः सन्निदर्शनम् ॥ १४ ॥

आर्ये ! अभिवादये भरतोऽहमस्मि ।

**सीता** — (आत्मगतम्) (क) णहि रूवं एव्व । सरजोओ वि सो एव्व । (प्रकाशम्) वच्छ ! चिरं जीव ।

**भरतः** — अनुगृहीतोऽस्मि ।

**सीता** — (ख) एहि वच्छ ! भादुमणोरहं पूरेहि ।

**सुमन्त्रः** — प्रविशतु कुमारः ।

**भरतः** — तात ! इदानीं किं करिष्यसि ।

---

नहि नहि । रूपसादृश्यम् ।

(क) नहि रूपमेव । स्वरयोगोऽपि स एव । वत्स ! चिरं जीव ।

(ख) एहि वत्स ! भ्रातृमनोरथं पूरय ।

---

१. 'यं तत्र' घ. पाठः.

सुमन्त्रः —

अहं पश्चात् प्रवेक्ष्यामि स्वर्गं याते नराधिपे ।
विदितार्थस्य रामस्य ममैतत् पूर्वदर्शनम् ॥ १५ ॥

भरतः —[1]एवमस्तु । (राममुपगम्य) आर्य ! अभिवादये भरतोऽहमस्मि ।

रामः — (सहर्षम्) एह्येहि इक्ष्वाकुकुमार ! स्वस्ति, आयुष्मान् भव ।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥ १६ ॥

भरतः — अनुगृहीतोऽस्मि ।

सुमन्त्रः — ([2]उपेत्य) जयत्वायुष्मान् ।

रामः — हा तात !

गत्वा पूर्वं स्वसैन्यैरभिसरिसमये खं समानैर्विमानै-
र्विख्यातो यो विमर्दे स स इति बहुशः सासुराणां सुराणाम् ।
स श्रीमांस्त्यक्तदेहो दयितमपि विना स्नेहवन्तं भवन्तं
स्वर्गस्थः साम्प्रतं किं रमयति पितृभिः स्वैर्नरेन्द्रैर्नरेन्द्रः ॥ १७ ॥

---

१. 'बाढम् (उप' ग. पाठः, २. 'उपसृत्य' ग. घ., 'उपगम्य' क. पाठः,

**सुमन्त्रः** — (सशोकम्)

नरपतिनिधनं भवत्प्रवासं भरतविषादमनाथतां कुलस्य ।
बहुविधमनुभूय दुष्प्रसह्यं गुण इव बद्धपराद्धमायुषा मे ॥१८॥

**सीता** — (क) रोदन्तं अय्यउत्तं पुणो वि रोदावीअदि तादो ।

**रामः**—मैथिलि! एष पर्यवस्थापयाम्यात्मानम्। वत्स! लक्ष्मण ! आपस्तावत् ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः ।

**भरतः** — आर्य! न खलु न्याय्यम् । क्रमेण शुश्रूषयिष्ये । अहमेव यास्यामि । (कलशं गृहीत्वा निष्क्रम्य प्रविश्य) इमा आपः ।

**रामः** — (आचम्य) मैथिलि ! विशीर्यते खलु लक्ष्मणस्य व्यापारः ।

**सीता** — (ख) अय्यउत्त ! णं एदिणा पि सुस्सूसइदव्वो ।

**रामः** — सुष्ठु खल्विह लक्ष्मणः शुश्रूषयतु । तत्रस्थो मां भरतः शुश्रूषयतु ।

**भरतः** — प्रसीदत्वार्यः ।

---

(क) रुदन्तमार्यपुत्रं पुनरपि रोदयति तातः ।

(ख) आर्यपुत्र! नन्वेतेनापि शुश्रूषयितव्यः ।

इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा।
नाम्नैव भवतो राज्यं कृतरक्षं भविष्यति ॥ १९ ॥

**रामः**—वत्स! कैकेयीमातः! मा मैवम्।

पितुर्नियोगा[1]दहमागतो वनं
न वत्स! दर्पान्न भयान्न विभ्रमात्।
कुलं च नः सत्यधनं ब्रवीमि ते
कथं भवान् नीचपथे प्रवर्तते ॥ २० ॥

**सुमन्त्रः**—अथेदानीमभिषेकोदकं क्व तिष्ठतु।

**रामः**—यत्र मे मात्राभिहितं, तत्रैव[2] तावत् तिष्ठतु।

**भरतः**—प्रसीदत्वार्यः। आर्य! अलमिदानीं व्रणे प्रहर्तुम्।

अपि सुगुण! ममापि त्वत्प्रसूतिः प्रसूतिः
स खलु निभृतधीमांस्ते पिता मे पिता च।
सुपुरुष! पुरुषाणां मातृदोषो न दोषो
वरद! भरतमार्तं पश्य तावद् यथावत्[3] ॥ २१ ॥

**सीता**—(क) अय्यउत्त! अदिकरुणं मन्तेअइ भरदो। किं दाणिं अय्यउत्तेण चिन्तीअदि।

---

(क) आर्यपुत्र! अतिकरुणं मन्त्रयते भरतः। किमिदानीमार्यपुत्रेण चिन्त्यते।

---

१. 'देशाद' क. ख. पाठः. २. 'व ति' ग. घ. पाठः. ३. 'र्थम्' घ. पाठः.

रामः — मैथिलि!

तं चिन्तयामि नृपतिं सुरलोकयातं
येनायमात्मजविशिष्टगुणो न दृष्टः ।
ईदृग्विधं गुणनिधिं समवाप्य लोके
धिग् भो! विधेर्यदि बलं पुरुषोत्तमेषु ॥ २२ ॥

वत्स! कैकेयीमातः!

यत्सत्यं परितोषितोऽस्मि भवता निष्कल्मषात्मा भवां-
स्त्वद्वाक्यस्य वशानुगोऽस्मि भवतः ख्यातैर्गुणैर्निर्जितः ।
किन्त्वेतन्नृपतेर्वचस्तदनृतं कर्तुं न युक्तं त्वया
किञ्चोत्पाद्य भवद्विधं भवतु ते मिथ्याभिधायी पिता ॥

भरतः —

यावद् भविष्यति भवन्नियमावसानं
तावद् भवेयमिह ते नृप! पादमूले ।

रामः —

मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
$मे शापितो न परिरक्षसि चेत् स्वराज्यम् ॥ २४ ॥

---

१. 'त' ख. घ. पाठः.

---

$ पादादावपि 'मे' आदेशः कृतः । सुबन्तप्रतिरूपमिदमव्ययं वा स्यात् ।

भरतः—हन्त! अनुत्तरमभिहितम्। भवतु, समयतस्ते[1] राज्यं परिपालयामि।

रामः—वत्स! कः समयः।

भरतः—मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते *प्रतिग्रहीतुमिच्छामि।

रामः—[2]एवमस्तु।

भरतः—आर्य! श्रुतम्[3]। आर्ये! श्रुतम्। तात! श्रुतम्।

[4]सर्वे—वयमपि श्रोतारः।

भरतः—आर्य! अन्य(द?म)पि वरं हर्तुमिच्छामि।

रामः—वत्स! किमिच्छसि। किमहं ददामि[5]। किमहमनुष्ठास्यामि।

भरतः—

पादोपभुक्ते तव पादुके मे
　　एते प्रयच्छ प्रणताय मूर्ध्ना।

---

१. 'स्तव रा' क. घ. पाठः. १. 'तथास्तु' घ. पाठः. ३. 'म् । ता' ग. घ. पाठः. ४. 'उभौ — बाढं, श्रोतारौ स्वः ।' ग. घ. पाठः. ५. 'मि । भ' ग. पाठः.

---

* प्रतिग्रहकर्ता रामो विवक्षितः।

यावद् भवानेष्यति कार्यसिद्धिं
तावद् भविष्याम्यनयोर्विधेयः ॥ २५ ॥

**रामः** — (स्वगतम्) हन्त भोः !

सुचिरेणापि[1] कालेन यशः किञ्चिन्मयार्जितम् ।
अचिरेणैव कालेन भरतेनाद्य सञ्चितम् ॥ २६ ॥

**सीता** — (क) अय्यउत्त ! णं दीयदि खु पुढमजाअणं[2] भरदस्स ।

**रामः** — तथास्तु । वत्स ! गृह्यताम् ।

**भरतः** — अनुगृहीतोऽस्मि । (गृहीत्वा) आर्य ! अत्राभिषेकोदकमावर्जयितुमिच्छामि ।

**रामः** — तात ! यदिष्टं भरतस्य, तत् सर्वं क्रियताम् ।

**सुमन्त्रः** — यदाज्ञापयत्यायुष्मान् ।

**भरतः** — (आत्मगतम्) हन्त भोः !

श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः ।

---

(क) आर्यपुत्र ! ननु दीयते खलु प्रथमयाचनं भरताय ।

---

१. 'णैव का' क. ख. घ. पाठः. २. 'पढमजा' ख. पाठः.

भ्रातॄणां गुणषालिनां बहुमतः कीर्त्तेर्महद् भाजनं
संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां[1] प्रियः ॥२७॥

रामः—वत्स! कैकेयीमातः![2] राज्यं नाम मुहूर्तमपि नोपेक्षणीयम्। तस्माद्द्यैव[3] विजयाय प्रतिनिवर्ततां कुमारः।

सीता—(क) हं, अज्ज एव्व गमिस्सदि कुमारो भरदो।

रामः—अलमतिस्नेहेन। अद्यैवं[4] विजयाय प्रतिनिवर्ततां कुमारः।

भरतः—आर्य! अद्यैवाहं गमिष्यामि।

आशावन्तः पुरे पौराः स्थास्यन्ति त्वद्दिदृक्षया।
तेषां प्रीतिं करिष्यामि त्वत्प्रसादस्य दर्शनात् ॥ २८ ॥

सुमन्त्रः—आयुष्मन्! मयेदानीं किं कर्तव्यम्।

रामः—तात! महाराजवत् परिपाल्यतां कुमारः।

सुमन्त्रः—यदि जीवामि,[5] तावत् प्रयतिष्ये।

रामः—वत्स! कैकेयीमातः! आरुह्यतां ममाग्रतो रथः।

(क) हम्, अद्यैव गमिष्यति कुमारो भरतः।

१. 'ब्धः प्रि' ख. घ. पाठः. २. 'त।' ख. घ. पाठः. ३. 'स्व।' ग. पाठः. ४. 'वं गच्छतु।' ख. पाठः. ५. 'मि प्र' घ. पाठः.

**भरतः**—यदाज्ञापयत्यार्यः ।

(रथमारोहतः)

**रामः**—मैथिलि ! इतस्तावत् । वत्स ! लक्ष्मण ! इतस्तावत् । आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं भविष्यामः ।

(इति निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः ।

---

१. 'यति)' क. पाठः.

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति सीता तापसी च ।)

**सीता** — (क) अय्ये! उवहारसुमणाइण्णो सम्मज्जिदो अ-स्समो । अस्समपदविभवेण अणुट्ठिओ[1] देवसमुदाआरो । ता जाव अय्यउत्तो ण आअच्छेदि, दाव इमाणं वाळरुक्खाणं उदअप्पदाणेण अणुक्कोसइस्सं[2] ।

**तापसी** — (ख) अविग्घं से होदु ।

(ततः प्रविशति रामः)

**रामः** — (सशोकम्[3])

त्यक्त्वा तां गुरुणा मया च रहितां रम्यामयोध्यां पुरी-
मुद्यम्यापि ममाभिषेकमखिलं मत्सन्निधावागतः ।
रक्षार्थं भरतः पुनर्गुणनिधिस्तत्रैव सम्प्रेषितः
कष्टं भो! नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥ १ ॥

---

(क) आर्ये! उपहारसुमनःकीर्णः संमार्जित आश्रमः । आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः । तद् यावदार्यपुत्रो नागच्छति, तावदिमान् बालवृक्षानुदकप्रदानेनानुक्रोशयिष्यामि ।

(ख) अविघ्नमस्या भवतु ।

---

१. 'ओ स' क. पाठः. २. 'ग्गाहिस्सं' क. पाठः. ३. 'म् ) भोः कष्टम् । त्य' घ. पाठः.

(विमृश्य) ईदृशमेवैतत् । यावदिदानीमीदृशशोकविनोदनार्थमवस्थाकुटुम्बिनीं मैथिलीं पश्यामि । तत् क्वनुखलु गता वैदेही । (परिक्रम्यावलोक्य) अये इमानि खलु प्रत्यग्राभिषिक्तानि वृक्षमूलानि अदूरगतां मैथिलीं सूचयन्ति । तथा हि,

भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः ।
स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलक्षयरेखया ॥ २ ॥

(विलोक्य) अये इयं वैदेही । भोः! कष्टम् ।

योऽस्याः करः श्राम्यति दर्पणेऽपि
स नैति खेदं कलशं वहन्त्याः ।
कष्टं वनं स्त्रीजनसौकुमार्यं
समं लताभिः कठिनीकरोति ॥ ३ ॥

(उपेत्य) मैथिलि! अपि तपो वर्धते ।

**सीता** — (क) हं अय्यउत्तो । जेदु अय्यउत्तो ।

**रामः** — मैथिलि! यदि ते नास्ति धर्मविघ्नः, आस्यताम् ।

---

(क) हम् आर्यपुत्रः । जयत्वार्यपुत्रः ।

---

१. 'नीं शो' ख. ग. घ. पाठः. २. 'इदानीं ख' घ. पाठः. ३. 'परिक्रम्यावलो' ग. घ. पाठः.

**सीता** — (क) जं अय्यउत्तो आणवेदि । ([1]उपविशति)

**रामः** — मैथिलि! प्रतिवचनार्थिनीमिव त्वां पश्यामि । किमिदम् ।

**सीता** — (ख) सोअसुण्णहिअअस्स विअ अय्यउत्तस्स मुहराओ । किं एदं ।

**रामः** — मैथिलि! स्थाने खलु[2] चिन्ता ।

कृतान्तशल्याभिहते शरीरे
तथैव तावद्धृदयव्रणो मे ।
नानाफलाः शोकशराभिघाता-
स्तत्रैव तत्रैव पुनः पतन्ति ॥ ४ ॥

**सीता** — (ग) अय्यउत्त[3]स्स को विअ सन्दावो ।

**रामः** — श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधिः । कल्पविशेषेण निवपनक्रियामिच्छन्ति पितरः । तत् कथं निर्वर्तयिष्या[4]मीत्येतच्चिन्त्यते । अथवा,

---

(क) यदार्यपुत्र आज्ञापयति ।

(ख) शोकशून्यहृदयस्येवार्यपुत्रस्य मुखरागः । किमेतत् ।

(ग) आर्यपुत्रस्य क इव सन्तापः ।

---

१. 'उभावुपविशतः)' क. पाठः. २. 'लु कृता चि' घ. पाठः. ३. 'त्त ! को हिअअस' घ. पाठः. ४. 'मि । एतच्चिन्तयामि ।' क. ग. घ. पाठः.

गच्छन्ति तुष्टिं खलु येन केन
त एव जानन्ति हि तां दशां मे ।
इच्छामि पूजां च तथापि कर्तुं
तातस्य रामस्य च सानुरूपाम्* ॥ ५ ॥

**सीता**—(क) अय्यउत्त ! णिव्वत्तइस्सिदि सद्धं भरदो रिद्धीए, अवत्थाणुरूवं फळोदएण वि अय्यउत्तो[1] । एदं तादस्स बहुमदअरं भविस्सदि ।

**रामः**—मैथिलि !

फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि नः ।
स्मारितो वनवासं च तातस्तत्रापि रोदिति ॥ ६ ॥

(ततः प्रविशति परिव्राजकवेषो रावणः)

**रावणः**—एष भोः !

नियतमनियतात्मा रूपमेतद् गृहीत्वा
खरवधकृतवैरं राघवं वञ्चयित्वा ।

---

(क) आर्यपुत्र ! निर्वर्तयिष्यति श्राद्धं भरत ऋद्ध्या, अवस्थानुरूपं फलोदकेनाप्यार्यपुत्रः । एतत् तातस्य बहुमततरं भविष्यति ।

---

१. 'त्तस्स ता' ग. पाठः.

---

* आनुरूप्यवतीमित्यर्थः ।

स्वरपदपरिहीणां हव्यधारामिवाहं
जनकनृपसुतां तां हर्तुकामः प्रयामि ॥ ७ ॥

(परिक्रम्याधो विलोक्य) इदं रामस्याश्रमपदद्वारम् । यावदवतरामि । (अवतीर्य[1]) यावदहमप्यतिथिसमुदाचारमनुष्ठास्यामि[2] । अहमतिथिः । कोऽत्र भोः ! ।

रामः — (श्रुत्वा) स्वागतमतिथये ।

रावणः[3] — साधु विशेषितं खलु रूपं स्वरेण ।

रामः — (विलोक्य[4]) अये भगवान् । भगवन्! अभिवादये ।

रावणः — स्वस्ति ।

रामः — भगवन्! एतदासनमास्यताम् ।

रावणः — (आत्मगतम्) कथमाज्ञप्त इवास्म्यनेन । (प्रकाशम्) बाढम् । (उपविशति)

रामः — मैथिलि! पाद्यमानय भगवते ।

सीता — (क) जं अय्यउत्तो आणवेदि । (निष्क्रम्य प्रविश्य) इमा आवो ।

रामः — शुश्रूषयं[5] भगवन्तम् ।

---

(क) यदार्यपुत्र आज्ञापयति । इमा आपः ।

---

१. 'तीर्य)' क. ग. घ. पाठः. २. 'रं तावदनु' क. ख. घ. पाठः. ३. 'रावण' इत्यस्य स्थाने सर्वत्र 'परिव्राजकः' इति घ. पाठः. ४. 'उपसर्पति)' ख. पाठः. ५. 'मस्व भ' घ. पाठः.

**सीता**—(क) जं अय्यउत्तो आणवेदि ।

**रावणः**—(मायाप्रकाशनपर्याकुलो भूत्वा) [१]भवतु भवतु ।

इयमेका पृथिव्यां हि मानुषीणामरुन्धती ।
यस्या भर्तेति नारीभिः सत्कृतः कथ्यते भवान् ॥ ८ ॥

**रामः**—तेन हि आनय, अहमेव शुश्रूषयिष्ये ।

**रावणः**—अयि छायां परिहृत्य शरीरं न लङ्घयामि । वाचानुवृ[२]त्तिः खल्वतिथिसत्कारः । पूजितोऽस्मि । आस्यताम् ।

**रामः**—बाढम् । (उपविशति)

[३]**रावणः**—(आत्मगतम्) यावदहमपि ब्राह्मणसमुदाचा[४]रमनुष्ठास्यामि । (प्रकाशम्) भोः! काश्यपगोत्रोऽस्मि । साङ्गोपाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च ।

**रामः**—कथं कथं श्राद्धकल्पमिति ।

**रावणः**—सर्वाः श्रुतीरतिक्रम्य श्राद्धकल्पे स्पृहा दर्शिता । किमेतत् ।

---

(क) यदार्यपुत्र आज्ञापयति ।

---

१. 'अलमलम्' ख. पाठः. २. 'वर्ती नन्वति' घ. पाठः. ३. परिव्राजकः—यावदहमपि अतिथिसमुदाचारं तावदनुष्ठास्यामि । रामः—छन्दतः । परिव्राजकः—भोः' घ. पाठः. ४. 'रं तावदनु' क. ख. घ. पाठः.

रामः—भगवन्! अष्टायां पितृमत्तायामागमे इदानीमेषः[1]।

रावणः—अलं परिहृत्य। पृच्छतु भवान्।

रामः—भगवन्! निवपनक्रियाकाले[2] केन पितॄंस्तर्पयामि।

रावणः—सर्वं श्रद्धया दत्तं श्राद्धम्।

रामः—भगवन्! अनादरतः परित्यक्तं भवति। विशेषार्थं पृच्छामि।

रावणः—श्रूयताम्। विरूढेषु दर्भाः, ओषधीषु तिलाः, कलायं शाकेषु, मत्स्येषु महाशफरः, पक्षिषु वार्ध्राणसः, पशुषु गौः खड्गो[3] वा, इत्येते मानुषाणां विहिताः।

रामः—भगवन्! वाशब्देनावगतमन्यदप्यस्तीति[4]।

रावणः—अस्ति प्रभावसम्पाद्यम्।

रामः—भगवन्! एष एव मे निश्चयः।

उभयस्यास्ति सान्निध्यं यद्येतत् साधयिष्यति।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः॥ ९॥

रावणः—सन्ति। हिमवति प्रतिवसन्ति।

रामः—हिमवतीति। ततस्ततः।

---

१. 'म एषः' क. ग. पाठः. २. 'यायां केन पितरस्तर्पयिष्यन्ति।' क. ग, 'यायां केन पितरस्तृप्यन्ति।' घ. पाठः. ३. 'धेयाः।' क. घ. पाठः. ४. 'व।' ग. पाठः.

**रावणः**—हिमवतः सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैडूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम मृगाः, यैर्वैखानसवालखिल्यनैमिशीयादयो महर्षयश्चिन्तितमात्रोपस्थितविपन्नैः श्राद्धान्यभिवर्धयन्ति ।

तैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां खमुपयान्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिभिश्च विषयैर्न बलाद्ध्रियन्ते ॥ १० ॥

**रामः**—मैथिलि !

†आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्यं वनं तव सखीर्दयिता लताश्च ।
वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवौषधिवनै[1]रुपरञ्जितेषु ॥ ११ ॥

**सीता**—(क) जं अय्यउत्तो आणवेदि ।

**रावणः**—कौसल्यामात ! अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्ते ।

---

(क) यदार्यपुत्र आज्ञापयति ।

---

१. 'रनुर' ख. ग. पाठः.

---

† 'आङि नुप्रच्छ्योः' (१. ३. २१) इति तङ् न कृतः ।

**रामः**—भगवन्! किं हिमवति प्रतिवसन्ति।

**रावणः**—अथकिम्।

**रामः**—[1]तेन हि पश्यतु भवान्।

सौवर्णा[2]न् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति।
भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति॥ १२॥

**रावणः**—(स्वगतम्) अहो असह्यः खल्वस्यावलेपः[3]।

**रामः**—(दिशो विलोक्य) अये विद्युत्सम्पात इव दृश्यते।

**रावणः**—कौसल्यामात! इहस्थमेव भवन्तं पूजयति हिमवान्। एष काञ्चनपार्श्वः।

**रामः**—भगवतो वृद्धिरेषा।

**सीता**—(क) दिट्ठिआ अय्यउत्तो वड्ढइ।

**रामः**—न न,

तातस्यैतानि भाग्यानि यदि स्वयमिहागतः।
अर्हत्येष हि पूजायां लक्ष्मणं ब्रूहि मैथिलि!॥ १३॥

**सीता**—(ख) अय्यउत्त[4]! णं तित्थअत्तादो उवावत्तमाणं कुळवदिं पच्चुग्गच्छेहित्ति सन्दिट्ठो सोमित्ती।

---

(क) दिष्ट्यार्यपुत्रो वर्धते।

(ख) आर्यपुत्र! ननु तीर्थयात्रात उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति संन्दिष्टः सौमित्रिः।

---

१. 'तर्हि प' घ. पाठः. २. 'र्णांस्तु मृ' क. घ. पाठः. ३. 'पः। (प्रकाशम्) अये विद्युत्सम्पात इव दृश्यते। कौ' क. ख. पाठः. ४. 'त्तेण ति' घ. पाठः.

**रामः**—तेन हि अहमेव यास्यामि ।

**सीता**—(क) अय्यउत्त! अहं किं करिस्सं ।

**रामः**—शुश्रू[1]षयस्व भगवन्तम् ।

**सीता**—(ख) जं अय्यउत्तो आणवेदि ।

([2]निष्क्रान्तो रामः)

**रावणः**—अये [3]अयमर्घ्यमादायोपसर्पति राघवः । एष इदानीं पूजामनवेक्ष्य धावन्तं मृगं दृष्ट्वा धनुरारोपयति [4]राघवः ।

अहो बलमहो वीर्यमहो सत्त्वमहो जवः ।
राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥ १४ ॥

एष मृगः एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः ।

**सीता**—(आत्मगतम्) (ग) अय्यउत्तविरहिदाए भअं [5]मे एत्थ [6]उप्पज्जइ ।

---

(क) आर्यपुत्र! अहं किं करिष्यामि ।

(ख) यदार्यपुत्र आज्ञापयति ।

(ग) आर्यपुत्रविरहिताया भयं मेऽत्रोत्पद्यते ।

---

१. 'य भ' ग. पाठः.　२. '(रामो धनुरादाय निष्क्रान्तः)' क. पाठः.　३. 'एषोऽर्घ्यं' ग. घ. पाठः.　४. 'रामः ।' ग., 'राघवः । सीता — एसो गच्छसि अय्यउत्तो । होदु + + + दणि मिओ । एष मृग एकप्लुतातिक्रान्तशरविषयो वनं गहनं प्रविष्टः । एष इदानीं पूजामनवेक्ष्य धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः । अहो बलमहो वीर्यमहो सत्त्वमहोजवः । राम इत्यक्षैरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥ सीता —' घ. पाठः.　५. 'मे उ' क. घ. पाठः　६. 'सम्पज्ज' ग. घ. पाठः.

**रावणः**—(आत्मगतम्)

माययापहृते रामे सीतामेकां तपोवनात् ।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् ॥ १५ ॥

**सीता**—(क) जाव उडजं पविसामि । (गन्तुमीहते)

**रावणः**—(स्वरूपं गृहीत्वा) सीते! तिष्ठ तिष्ठ ।

**सीता**—(सभयम्) (ख) हं को दाणि अअं ।

**रावणः**[2]—किं न जानीषे ।

युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिता
दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ ।
दर्पाद् दुर्मतिमप्रमेयबलिनं रामं विलोभ्यच्छलैः
स त्वां हर्तुमना विशालनयने! प्राप्तोऽस्म्यहं रावणः ॥

**सीता**—(ग) हं ळावणो णामं[3] । (प्रतिष्ठते)

**रावणः**—आः रावणस्य चक्षुर्विषयमागता क्व यास्यसि ।

---

(क) यावदुटजं प्रविशामि ।

(ख) हं क इदानीमयम् ।

(ग) हं रावणो नाम ।

---

१. '(उत्तिष्ठति)' ग. घ. पाठः. २. 'णः—श्रूयतां, यु' ग. पाठः., 'णः—यु' क. ख. पाठः. ३. 'म । (प्रस्थातुमिच्छति)' ख. पाठः., 'म । रा' क. घ. पाठः.

**सीता**—(क) अय्यउत्त! परित्ताआहि परित्ताआहि । सोमित्ती! परित्ताआहि परित्ताआहि[1] ।

**रावणः**—सीते! श्रूयतां मत्पराक्रमः ।

भग्नः शक्रः कम्पितो वित्तनाथः
क्रुष्टः सोमो मर्दितः सूर्यपुत्रः ।
धिग् भो! स्वर्गं भीतदेवैर्निविष्टं
धन्या भूमिर्वर्तते यत्र सीता ॥ १७ ॥

**सीता**—(ख) अय्यउत्त! परित्ताआहि परित्ताआहि । सोमित्ती! परित्ताआहि परित्ताआहि मं ।

**रावणः**—

रामं वा शरणमुपेहि लक्ष्मणं वा
स्वर्गस्थं दशरथमेव वा नरेन्द्रम् ।
किं (मन्त्या[2] ?)* कुपुरुषसंश्रितैर्वचोभि-
र्न व्याघ्रं मृगशिशवः प्रधर्षयन्ति ॥ १८ ॥

(क) आर्यपुत्र! परित्रायस्व परित्रायस्व । सौमित्र! परित्रायस्व परित्रायस्व ।

(ख) आर्यपुत्र! परित्रायस्व परित्रायस्व । सौमित्रे! परित्रायस्व परित्रायस्व माम् ।

१. 'हि मं ।' क. घ. पाठः. २. '(मिथ्यैः ?) कु' ख. ग. पाठः.

* 'मन्त्या' इत्यस्य स्थाने 'मे स्याद्' इति पठनीयं भाति । 'मिथ्यैः' इति पाठान्तरस्थाने तु 'व्यर्थैः' इति पठनीयं भाति ।

**सीता** — (क) अय्यउत्त ! परित्ताआहि परित्ताआहि । सोमित्ती ! परित्ताआहि परित्ताआहि मं ।

**रावणः** —

विलपसि किमिदं विशालनेत्रे !
 विगणय मां च यथा तवार्यपुत्रम् ।
विपुलबलयुतो ममैष योद्धुं
 ससुरगणोऽप्यसमर्थ एव रामः ॥ १९ ॥

**सीता** — (सरोषम्) सत्तो[1] सि ।

**रावणः** — हहह । अहो पतिव्रतायास्तेजः ।

योऽहमुत्पतितो वेगान्न दग्धः सूर्यरश्मिभिः ।
अस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः[2] ॥ २० ॥

**सीता** — (ग) अय्यउत्त ! परित्ताआहि परित्ताआहि ।

**रावणः**[3] — (सीतां गृहीत्वा) भो भो ! जनस्थानवासिनस्तपस्विनः ! श्रृण्वन्तु शृण्वन्तु भवन्तः ।

---

(क) आर्यपुत्र ! परित्रायस्व परित्रायस्व । सौमित्रे ! परित्रायस्व परित्रायस्व माम् ।

(ख) शप्तोऽसि ।

(ग) आर्यपुत्र ! परित्रायस्व परित्रायस्व ।

---

१. 'न्ती सि' क. ग. घ. पाठः. २. 'श्रान्तोऽसी' क. ग. घ. पाठः. ३. 'णः — भो' क. पाठः.

बलादेष दशग्रीवः सीतामादाय गच्छति ।
क्षात्त्रधर्मे यदि स्निग्धः कुर्याद् रामः पराक्रमम् ॥ २१ ॥

**सीता** — (क) अय्यउत्त! परित्ताआहि[1] परित्ताआहि ।

**रावणः** — (परिक्रामन् विलोक्य) अये स्वपक्षपवनोत्क्षेपक्षुभितवनषण्डश्चण्डे[2]चञ्चुरभिधावत्येष जटायुः । आः तिष्ठेदानीम् ।

मञ्जुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥ २२ ॥

([3]निष्क्रान्तौ[4])

पञ्चमोऽङ्कः ।

---

(क) आर्यपुत्र! परित्रायस्व परित्रायस्व ।

---

१. 'हि । सोमित्ति! परित्ताआहि म ।' ग. पाठः. २. 'ण्डश्चञ्चञ्चु' ख. पाठः. ३. 'सीतां गृहीत्वा रावणो निष्क्रान्तः । (निष्क्रान्ताः सर्वे) प' घ. पाठः. ४. (न्तो रावणः सीतां गृहीत्वा) प' ख. पाठः ।

## अथ षष्ठोऽङ्कः ।

(ततः प्रविशतो[1] वृद्धतापसौ)

उभौ — परित्रायतां परित्रायतां भवन्तः !

प्रथमः —

इयं हि नीलोत्पलदामवर्चसा
मृणालशुक्लोज्ज्वलदंष्ट्रहासिना ।
निशाचरेन्द्रेण निशार्धचारिणा
मृगीव सीता परिभूय नीयते ॥ १ ॥

द्वितीयः — एषा खलु तत्रभवती वैदेही,

वि[2]चेष्टमानेव भुजङ्गमाङ्गना
विधूयमानेव च पुष्पिता लता ।
प्रसह्य पापेन दशाननेन सा
तपोवनात् सिद्धिरिवापनीयते ॥ २ ॥

उभौ — परित्रायतां परित्रायतां भवन्तः ! ।

प्रथमः — (ऊर्ध्वमवलोक्य) अये वचनसमकाले[3] एव दशरथस्यानृण्यं कर्तुं 'मयि स्थिते क्व यास्यसी'ति रावणमाहूयान्तरिक्षमुत्पतितो जटायुः ।

द्वितीयः — एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः ।

---

१. 'तस्ताप' क. ग. पाठः. २. 'वे' ख. घ. पाठः. ३. 'लमेव' घ. पाठः.

**प्रथमः**— एष रावणः ।

**द्वितीयः**— एष जटायुः ।

**उभौ**— हन्तैतदन्तरिक्षे प्रवृत्तं युद्धम् ।

**प्रथमः**— काश्यप[1]! काश्यप! पश्य क्रव्यादीश्वरस्य सामर्थ्यम् ।

पक्षाभ्यां परिभूय वीर्यविषयं द्वन्द्वं प्रतिव्यूहते
तुण्डाभ्यां सुनिघृष्टतीक्ष्ण[2]चपलः (?) संवेष्टनं चेष्टते ।
तीक्ष्णैरायसकण्टकैरिव नखैर्भीमान्तरं वक्षसो
वज्राग्रैरिव दार्यमाणविषमाच्छैलाच्छिला पात्यते ॥ ३ ॥

**द्वितीयः**— [3]हन्त संक्रुद्धेन रावणेनासिना क्रव्यादीश्व[4]रः स दक्षिणांसदेशो हतः ।

**उभौ**— हा धिक् । पतितोऽत्रभवान् जटायुः ।

[5]**प्रथमः**— भोः कष्टम् । एष खलु तत्रभवान् जटायुः,

कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा ।
दीप्तं निशाचरपतेरवधूय तेजो
नागेन्द्रभग्नवनवृक्ष इवावसन्नः ॥ ४ ॥

---

१. 'प! पश्य पश्य क्रव्यादेश्व' घ., 'प! पश्य । पश्य' क. ग. पाठः. २. 'मचल' ख. पाठः. ३. 'एष सं' क. ग. पाठः. ४. 'रस्य दक्षिणांसदेशो ह' क. ग. पाठः. ५. 'द्वितीयः—' क. ग. घ. पाठः.

**उभौ** — स्वर्ग्योऽयमस्तु ।

**प्रथमः** — काश्यप ! आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयिष्यावः ।

**द्वितीयः** — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्तौ)

**विष्कम्भकः ।**

---

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः** — क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ।

(प्रविश्य)

**प्रतिहारी** — (क) अय्य ! अहं विजया । किं करीअदु ।

**काञ्चुकीयः** — विजये ! निवेद्यतां निवेद्यतां भरतकुमाराय — एष खलु रामदर्शनार्थं जनस्थानं प्रस्थितः प्रतिनिवृत्तस्तत्रभवान् सुमन्त्र इति ।

**प्रतिहारी** — (ख) अय्य ! अवि किदत्थो [1]तादसुमन्तो आअदो ।

---

(क) आर्य ! अहं विजया । किं क्रियताम् ।

(ख) आर्य ! अपि कृतार्थस्तातसुमन्त्र आगतः ।

---

१. 'अय्यसु' ग. घ. पाठः.

**काञ्चुकीयः** — भवति ! न जाने ।

हृदयस्थितशोकाग्निशोषिताननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥ ५ ॥

**प्रतिहारी** — (क) अय्य ! एदं[1] सुणिअ पय्याउळं विअ मे हिअअं ।

**काञ्चुकीयः** — भवति ! किमिदानीं स्थिता । शीघ्रं निवेद्यताम् ।

**प्रतिहारी** — (ख) अय्य ! इअं णिवेदेमि । (निष्क्रान्ता)

**काञ्चुकीयः** — (विलोक्य) अये ! अयमत्रभवान्[2] भरतकुमारः । सुमन्त्रागमनजनितकुतूहलै[3]हृदयश्चीरवल्कलवसनाश्चित्रजटापुञ्जपिञ्जरितोत्तमाङ्ग इत एवाभिवर्तते । य एषः,

प्रख्यातसद्गुणगणः प्रतिपक्षकाल-
स्तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः ।
आज्ञावशादखिलभूपरिरक्षणस्थः
श्रीमानुदारकलभेभसमानयानः ॥ ६ ॥

---

(क) आर्य ! एतच्छ्रुत्वा पर्याकुलमिव मे हृदयम् ।

(ख) आर्य ! इयं निवेदयामि ।

---

१. 'एवं सु' क. ख. पाठः. २. 'यं भर' घ. पाठः. ३. 'लश्री' क. घ. पाठः.

(ततः प्रविशति भरतः प्रतिहारी च)

**भरतः** — विजये ! एवम् , उपगतस्तत्रभवान् सुमन्त्रः ।

गत्वा तु पूर्वम(ह?य)मार्यनिरीक्षणार्थं
लब्धप्रसादशपथे मयि सन्निवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनबुद्धिमनोभिरामम् ॥ ७ ॥

**काञ्चुकीयः** — (उप[1]गम्य) जयतु कुमारः ।

**भरतः** — अथ कस्मिन् प्रदेशे[2] वर्तते तत्रभवान् सुमन्त्रः[3] ।

**काञ्चुकीयः** — असौ काञ्चनतोरणद्वारे ।

**भरतः** — तेन हि शीघ्रं प्रवेश्यताम् ।

**काञ्चुकीयः** — यदाज्ञापयति कुमारः ।

(निष्क्रान्तौ[4])

(ततः प्रविशति सुमन्त्रः प्रतिहारी च)

**सुमन्त्रः** — (सशोकम्) कष्टं भोः ! कष्टम् ।

नरपतिनिधनं मयानुभूतं
नृपतिसुतव्यसनं मयैव दृष्टम् ।

---

१. 'पेत्य)' क. ग. पाटः. २. 'शे त' ख. पाठः. ३. 'न्त्रो वर्तते ।' ख. पाठः. ४. 'न्तः)' क. ग. घ. पाठः.

श्रुत इह स च मैथिलीप्रणाशो
गुण इव बह्वपराद्धमायुषो मे ॥ ८ ॥

**प्रतिहारी** — (सुमन्त्रमुद्दिश्य) (क) एदु एदु अय्यो । एसो भट्टा । उपसप्पदु अय्यो ।

**सुमन्त्रः** — (उपसृत्य) जयतु कुमारः ।

**भरतः** — तात! अपि दृष्टस्त्वया लोकाविष्कृतपितृस्नेहः । अपि दृष्टं[1] द्विधाभूतमरुन्धतीचारित्रम्। अपि दृष्टं त्वया निष्कारणावहितवनवाससौभ्रात्रम्[2] ।

(सुमन्त्रः सचिन्तस्तिष्ठति)

**प्रतिहारी** — (ख) भट्टिदारओ खु अय्यं पुच्छदि ।

**सुमन्त्रः** — भवति! किं माम् ।

**भरतः** — (स्वगतम्) अतिमहान् खल्वायासः । सन्तापाद् भ्रष्टहृदयः । (प्रकाशम्) अपि मार्गात् प्रतिनिवृत्तस्तत्रभवान् ।

---

(क) एत्वेत्वार्यः । एष भर्ता । उपसर्पत्वार्यः ।

(ख) भर्तृदारकः खल्वार्यं पृच्छति ।

---

१. 'ष्टस्त्वया' ख. पाठः. २. 'त्रः । ' ख. पाठः.

**सुमन्त्रः** — कुमार ! त्वन्नियोगाद् रामदर्शनार्थं जनस्थानं प्रस्थितः कथमहमन्तरा प्रतिनिवर्तिष्ये ।

**भरतः** — किन्नुखलु क्रोधेन वा लज्जया वात्मानं न दर्शयन्ति ।

**सुमन्त्रः** — कुमार !

कुतः क्रोधो विनीतानां लज्जा वा कृतचेतसाम् ।
मया दृष्टं तु तच्छून्यं तैर्विहीनं तपोवनम् ॥ ९ ॥

**भरतः** — अथ क्व गता इति श्रुताः[1] ।

**सुमन्त्रः** — अस्ति किल किष्किन्धा नाम वनौकसां[2] निवासः । तत्र गता इति श्रुताः[3] ।

**भरतः** — हन्त अविज्ञातपुरुषविशेषाः खलु वानराः । दुःखिताः प्रतिवसन्ति ।

**सुमन्त्रः** — कुमार ! तिर्यग्योनयोऽप्युपकृतमवगच्छन्ति ।

**भरतः** — तात ! कथमिव ।

**सुमन्त्रः** —

सुग्रीवो भ्रंशितो राज्याद् भ्रात्रा ज्येष्ठेन वालिना ।
हृतदारो वसञ्छैले तुल्यदुःखेन मोक्षितः ॥ १० ॥

---

१. 'श्रूयन्ते ।' घ. पाठः. २. 'सामधिवा' घ. पाठः. ४. 'श्रूयन्ते ।' घ. पाठः.

**भरतः** — तात ! कथं तुल्यदुःखेनं नाम ।

**सुमन्त्रः** — (आत्मगतम्) हन्त सर्वमुक्तमेव मया । (प्रकाशम्) कुमार ! नखलु किञ्चित् । ऐश्वर्यभ्रंशतुल्यता ममाभिप्रेता ।

**भरतः** — तात ! किं गूहसे । स्वर्गं गतेन महाराजपाद-[2] मूलेन शापितः स्याः, यदि सत्यं न ब्रूयाः ।

**सुमन्त्रः** — का गतिः । श्रूयतां,

वैरं मुनिजनस्यार्थे रक्षसा महता कृतम् ।
सीता मायामुपाश्रित्य रावणेन ततो हृता ॥ ११ ॥

**भरतः** — कथं हृतेति । (मोहमुपगतः)

**सुमन्त्रः** — समाश्वसिहि समाश्वसिहि ।

**भरतः** — (पुनः समाश्वस्य) भोः ! कष्टम् ।

पित्रा च बान्धवजनेन च विप्रयुक्तो
दुःखं महत् समनुभूय वनप्रदेशे ।
भार्यावियोगमुपलभ्य पुनर्ममार्यो
जीमूतचन्द्र इव खे प्रभया वियुक्तः ॥ १२ ॥

---

१. 'नेति ।' ग. पाठः. २. 'जेन' क., 'जपादेन' ख. ग. पाठः.

भोः ! किमिदानीं करिष्ये । भवतु , दृष्टम् । अनुगच्छतु मा तातः ।

**सुमन्त्रः** — यदाज्ञापयति कुमारः ।

(उभौ परिक्रामतः)

**सुमन्त्रः** — कुमार ! नखलु नखलु गन्तव्यम् । देवीनां चतुश्शालमिदम् ।

**भरतः** — अत्रैव मे कार्यम् । भोः ! क इह प्रतिहारे ।

(प्रविश्य)

**प्रतिहारी** — (क) जेदु भट्टिदारओ । विजआ खु अहं ।

**भरतः** — विजये ! ममागमनं निवेदयात्रभवत्यै ।

**प्रतिहारी** — (ख) कदमाए भट्टिणीए णिवेदेमि ।

**भरतः** — या मां राजानमिच्छति ।

**प्रतिहारी** — (आत्मगतम्) (ग) हं किंणुखु भवे । (प्रकाशम्) भट्टा ! तह । (निष्क्रान्ता)

---

(क) जयतु भर्तृदारकः । विजया खल्वहम् ।

(ख) कतमस्यै भट्टिन्यै निवेदयामि ।

(ग) हं किन्नुखलु भवेत् । भर्तः ! तथा ।

(ततः प्रविशति कैकेयी प्रतिहारी च)

**कैकेयी** — (क) विजए ! मं पेक्खिदुं भरदो[1] आअदो।

**प्रतिहारी** — (ख) भट्टिणि! तह। भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो। तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदुं इच्छदि किळ।

**कैकेयी** — (स्वगतम्) (ग) केण खु उग्घादेण मं उवाळम्भिस्सिदि भरदो।

**प्रतिहारी** — (घ) भट्टिणि! किं पविसदु भट्टिदारओ।

**कैकेयी** — (ङ) गच्छ। पवेसेहि णं।

**प्रतिहारी** — (च) भट्टिणि ! तह। (परिक्रम्योपसृत्य) जेदु भट्टिदारओ। पविसदु किळ।

---

(क) विजये ! मां प्रेक्षितुं भरत आगतः।

(ख) भट्टिनि! तथा। भर्तृदारकस्य रामस्य सकाशात् तातसुमन्त्र आगतः। तेन सह भर्तृदारको भरतो भट्टिनीं प्रेक्षितुमिच्छति किल।

(ग) केन खलूद्धातेन मामुपालप्स्यते भरतः।

(घ) भट्टिनि! किं प्रविशतु भर्तृदारकः।

(ङ) गच्छ। प्रवेशयैनम्।

(च) भट्टिनि ! तथा। जयतु भर्तृदारकः। प्रविशतु किल।

---

१. 'हो आ' ख. ग. पाठः.

**भरतः** — विजये ! किं निवेदितम् ।

**प्रतिहारी** — आम ।

**भरतः** — तेन हि प्रविशावः ।

(प्रविशतः)

**कैकेयी** — (क) जाद! विअआ मन्तेदि — रामस्स सआसादो सुमन्तो आअदत्ति ।

**भरतः** — अतः परं प्रियं निवेदयाम्यत्रभवत्यै ।

**कैकेयी** — (ख) जाद ! अवि कोसल्ला सुमित्ता अ सद्दावइदव्वा ।

**भरतः** — न खलु ताभ्यां श्रोतव्यम् ।

**कैकेयी** — (आत्मगतम्) (ग) हं किंणुहु भवे । (प्रकाशम्) भणाहि जाद ! ।

**भरतः** — श्रूयतां ,

य: स्वराज्यं परित्यज्य त्वन्नियोगाद् वनं गतः ।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥ १३ ॥

---

(क) जात! विजया मन्त्रयते — रामस्य सकाशात् सुमन्त्र आगत इति ।

(ख) जात! अपि कौसल्या सुमित्रा च शब्दयितव्या ।

(ग) हं किन्नुखलु भवेत् । भण जात ! ।

**कैकेयी** — हं ।

**भरतः** —

हन्त भोः ! सत्त्वयुक्तानामिक्ष्वाकूणां मनस्विनाम् ।
वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥ १४ ॥

**कैकेयी** — (आत्मगतम्) (क) भोदु, दाणि कालो कहेउं । (प्रकाशम्) जाद ! तुवं ण आणासि महाराअस्स सावं ।

**भरतः** — किं शप्तो महाराजः ।

**कैकेयी** — (ख) सुमन्त ! आअक्ख[1] वित्थरेण ।

**सुमन्त्रः** — यदाज्ञापयति भवती । कुमार[2] ! श्रूयताम् — पुरा मृगयां गतेन महाराजेन कस्मिंश्चित् सरसि कलशं[3] पूर्यमाणो[4] वनगजबृंहितानुकारिशब्द[5]समुत्पन्नवनगजशङ्कया शब्दवेधिना शरेण विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो[6] मुनितनयो हिंसितः ।

---

(क) भवतु, इदानीं कालः कथयितुम् । जात ! त्वं न जानासि महाराजस्य शापम् ।

(ख) सुमन्त्र ! आचक्ष्व विस्तरेण ।

---

१. 'चिक्ख' ग. घ. पाठः. २. 'श्रोतुमर्हति कुमारः— पु' क. घ. पाठः. ३. 'शजलं पू' ख. पाठः. ४. 'यन् व' क. पाठः. ५. 'स्वनस' ख. पाठः. ६. 'तो नाम मु' ख., 'तो मुनिपुत्रो हिं' क. ग. घ. पाठः.

भरतः — हिंसित[1] इति । शान्तं शान्तं पापम् । ततस्ततः ।

सुमन्त्रः — ततस्तमेवं गतं दृष्ट्वा,

तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा[2] ।
यथाहं भोस्त्वमप्येवं पुत्रशोकाद् विपत्स्यसे ॥ १५ ॥

इति ।

भरतः — नन्विदं कष्टं नाम ।

कैकेयी — (क) जाद! एदण्णिमित्तं अवराहे मं णिक्खिविअ पुत्तओ रामो वणं पेसिदो, णहु रज्जलोहेण । अपरिहरणीओ महरिसि[3]सावो[4] पुत्तविप्पवासं विणा ण होइ ।

भरतः — अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेषितः[5] ।

कैकेयी — (ख) जाद! मादुळकुळे वत्तमाणस्स पइदीहूदो दे विप्पवासो ।

---

(क) जात! एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः, न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति ।

(ख) जात! मातुलकुले वर्तमानस्य प्रकृतीभूतस्ते विप्रवासः ।

---

१. 'तपसा स' क. ग. घ. पाठः. २. 'वादिना' क. पाठः. ३. 'हेसि' ग. पाठः. ४. 'वो ।' ग. पाठः. ५. 'प्रवेशितः' क. ग. घ. पाठः.

भरतः — अथ चतुर्दश वर्षाणि किं कारणमवेक्षितानि[1] ।

कैकेयी — (क) जाद ! चउद्दस दिअस त्ति वत्तुकामाए[2] पय्याउळहिअआए चउद्दश वरिसाणि त्ति उत्तं ।

भरतः — अस्ति पाण्डित्यं सम्यग् विचारयितुम् । अथ विदितमेतद् गुरुजनस्य ।

सुमन्त्रः — कुमार ! वसिष्ठवामदेवप्रभृतीनामनुमतं विदितं च ।

भरतः — हन्त त्रैलोक्यसाक्षिणः खल्वेते । दिष्ट्यानपरा[3]द्धात्रभवती । अम्ब ! यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती, तत् सर्वं मर्षयितव्यम् । अम्ब ! अभिवादये ।

कैकेयी — (ख) जाद ! का णाम मादा पुत्तअस्स अवराहं ण मरिसेदि । उट्ठेहि उट्ठेहि । को एत्थ दोसो ।

भरतः — अनुगृहीतोऽस्मि । *आपृच्छाम्यत्रभवतीम् । अद्यै-

(क) जात ! चतुर्दश दिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दश वर्षाणीत्युक्तम् ।

(ख) जात ! का नाम माता पुत्रकस्यापराधं न मर्षयति । उत्तिष्ठोत्तिष्ठ । कोऽत्र दोषः ।

१. 'मपेक्षि' घ. पाठः. २. 'त्ति मए उत्तं । पय्याउळहिअआए मन्थराए चउ' ख. पाठः. ३. 'वक्रष्टात्र' ग. पाठः.

.* इहापि तङ् न कृतः ।

वाहमार्यस्य साहाय्यार्थं कृत्स्नं राजमण्डलमुद्योजयामि । अयमिदानीं,

वेलामिमां मत्तगजान्धकारां
करोमि सैन्यौघनिवेशनद्धाम् ।
बलैस्तरङ्गैश्च नयामि तुल्यं
ग्लानिं समुद्रं सह रावणेन ॥ १६ ॥

अये शब्द इव[1] । तूर्णं ज्ञायतां शब्दः ।

(प्रविश्य)

**प्रतिहारी** — (क) जेदु कुमारो । इमं वुत्तन्तं सुणिअ जे-ट्ठभट्टिणी[2] मोहं गआ[3] ।

**कैकेयी** — हं ।

**भरतः** — कथं मोहमुपगताम्बा ।

**कैकेयी** — (ख) एहि जाद ! अय्यं अस्सासइस्सामो[4] ।

(क) जयतु कुमारः । इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता ।

(ख) एहि जात ! आर्यामाश्वासयिष्यावः ।

१. 'व श्रूयते । तू' घ. पाठः. २. 'ट्ठ भट्टिणी । इ' ग. घ. पाठः. ३. 'आ । भ' क. ख. ग. पाठः. ४. 'गच्छ जाद अय्या दे अस्सासइदव्वा ।' ग. घ. पाठः.

भरतः — यदाज्ञापयत्यम्बा ।

(निष्क्रान्ताः सर्वे)

**षष्ठोऽङ्कः ।**

---

# सप्तमोऽङ्कः ।

(ततः प्रविशति तापसः[1])

तापसः[2] — नन्दिलक ! नन्दिलक ! ।

(प्रविश्य)

**नन्दिलकः** — (क) अय्य ! अअं ह्मि ।

**तापसः[3]** — नन्दिलक ! कुलपतिर्विज्ञापयति — एष खलु स्वदारापहारिणं त्रैलोक्यविद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रां तत्रभवतीं सीतामादाय ऋक्षराक्षसवानरमुख्यैः परिवृतः सम्प्राप्तस्तत्रभवान् शरद्विमलगगनचन्द्राभिरामो रामः । तदस्यास्मिन्नाश्रमपदे[4]ऽस्माद्विभवेन यत् सङ्कल्पयितव्यं, तत् सर्वं[5] सज्जीक्रियताम् इति ।

**नन्दिलकः** — (ख) अय्य ! सव्वं सज्जीकिदं[6] । किन्तु,

---

(क) आर्य ! अयमस्मि ।

(ख) आर्य ! सर्वं सज्जीकृतम् । किन्तु,

---

१. 'तापसकुमारः)' ग. पाठः, 'ऋषिकुमारः)' ख. पाठः. २. 'ऋषिकुमारः—' ३. 'ऋषिकुमारः' ख. पाठः. ४. 'दस्यास्मि' घ., 'देतस्मि' ग. पाठः. ५. 'वं क्रि' ख. ग. घ. पाठः. ६. 'संकप्पिदं' घ. पाठः

**तापसः** — किमेतत् ।

**नन्दिलकः** — (क) एत्थ विभीसणकेरआ रक्खसा । तेसं भक्खणणिमित्तं कुळवदी पमाणं ।

**तापसः** — किमर्थम् ।

**नन्दिलकः** — (ख) ते खु खज्जन्ति ।

**तापसः** — अलमलं सम्भ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

**नन्दिलकः** — (ग) णमो रक्खससज्जणाअ । (निष्क्रान्तः)

**तापसः** — (विलोक्य) अये अयमत्रभवान् राघवः । य एषः,

जय नरवर ! जेयः स्याद् द्वितीयस्तवारि-
स्तव भवतु विधेया भूमिरेकातपत्रा ।

---

(क) अत्र विभीषणसम्बन्धिनो राक्षसाः । तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम् ।

(ख) ते खलु खादन्ति ।

(ग) नमो राक्षससज्जनाय ।

---

१. 'रामः । य' घ. पाठः.

इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः
क्षितितलमवतीर्णो मानवेन्द्रो विमानात् ॥ १ ॥

जयतु भवान् जयतु । (निष्क्रान्तः)

मिश्रविष्कम्भकः[1] ।

---

(ततः प्रविशति रामः)

रामः — भोः !

समुदितबलवीर्यं रावणं नाशयित्वा
जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।
वचनमपि गुरूणामन्तशः पूरयित्वा
मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥ २ ॥

तापसीनामभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु[2] मैथिली । (विलोक्य) अये इयं[3] वैदेही,

सखीति सीतेति च जानकीति
यथावयः स्निग्धतरं स्नुषेति ।
तपस्विदारैर्जनकेन्द्रपुत्री
सम्भाष्यमाणा समुपैति मन्दम् ॥ ३ ॥

---

१. 'वादना' क. ग. पाठः. २. 'लु वैदेही ।' क. पाठः. ३. 'एषा खलु वै' ग. पाठः.

(ततः प्रविशति सीता तापसी च)

**तापसी** — (क) हळा ! एसो दे कुडुम्बिओ[1] । उवसप्प णं । ण सक्कं तुमं एआइणिं पेक्खिदुं ।

**सीता** — (ख) हं अज्ज वि अविस्ससणीअं विअ मे पडिभादि । (उपसृत्य) जेदु अय्यउत्तो ।

**रामः** — मैथिलि ! अपि जानासि, पूर्वाधिष्ठानमस्माकं जनस्थानमासीत् । अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ।

**सीता** — (ग) जाणामि जाणामि । ओळोइअपत्तआ[2] उळ्ळोळिअदव्वा दाणिं संवुत्ता ।

**रामः** — एवमेतत् । निम्नस्थलोत्पादको हि कालः । मैथिलि ! अप्युपलभ्यतेऽस्य सप्तपर्णस्याधस्ताच्छुक्लवाससं भरतं दृष्ट्वा परित्रस्तं मृगयूथमासीत् ।

**सीता** — (घ) अय्यउत्त ! दिढं खु सुमरामि ।

---

(क) हला ! एष ते कौटुम्बिकः । उपसर्पैनम् । न शक्यं त्वामेकाकिनीं प्रेक्षितुम् ।

(ख) हम् अद्याप्यविश्वसनीयमिव मे प्रतिभाति । जयत्वार्यपुत्रः ।

(ग) जानामि जानामि । अवलोकितपत्रका उल्लोकयितव्या इदानीं संवृत्ताः ।

(घ) आर्यपुत्र ! दृढं खलु स्मरामि ।

---

१. 'ओ । ण' ग. पाठः. २. 'सि' ग. पाठः.

रामः — अयं तु नरस्तपसः साक्षिभूतो महाकच्छः। अत्रास्माभिरासीनैस्तातस्य निर्वपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो नाम मृगो दृष्टः।

सीता — (क) हं अय्यउत्त ! मा खु मा खु एवं भणिदुं। (भीता वेपते)

रामः — अलमलं सम्भ्रमेण। अतिक्रान्तः खल्वेष कालः। (दिशो विलोक्य) अये कुतो नु,

रेणुः समुत्पतति लोध्रसमानगौरः
सम्प्रावृणोति च दिशः पवनावधूतः।
शङ्खध्वनिश्च पटहस्वनधीरनादैः
सम्मूर्च्छितो वनमिदं नगरीकरोति ॥ ४ ॥

(प्रविश्य)

लक्ष्मणः — जयत्वार्यः। आर्य !

अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः।
मातृभिः सह सम्प्राप्तो भरतो भ्रातृवत्सलः ॥ ५ ॥

रामः — वत्स लक्ष्मण ! किमेवं भरतः प्राप्तः।

---

(क) हम् आर्यपुत्र ! मा खलु मा खल्वेवं भणितुम्।

---

१. 'मा मा ए' ग. पाठः.

**लक्ष्मणः** — आर्ये ! अथकिम् ।

**रामः** — मैथिलि! श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीक्रियतां ते चक्षुः ।

**सीता** — (क) अय्यउत्त ! इच्छिदव्वे काळे भरदो आअदो ।

(ततः प्रविशति भरतः समातृकः)

**भरतः** —

तैस्तैः प्रवृद्धविषयैर्विषमैर्विमुक्तं
मेघैर्विमुक्तममलं शरदीव सोमम् ।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोऽस्मि तुष्टहृदयः स्वजनानुबद्धः ॥ ६ ॥

**रामः** — अम्बाः ! अभिवादये ।

**सर्वाः** — (ख) जाद ! चिरं जीव । दिट्ठिआ वड्ढामो अवसिदपडिण्णं तुमं कुसळिणं सह वहूए पेक्खिअ ।

**रामः** — अनुगृहीतोऽस्मि ।

---

(क) आर्यपुत्र ! एष्टव्ये काले भरत आगतः ।

(ख) जात ! चिरं जीव । दिष्ट्या वर्धामहे अवसितप्रतिज्ञं त्वां कुशलिनं सह वध्वा प्रेक्ष्य ।

---

१. 'शु' ग. पाठः.

**लक्ष्मणः**— अम्बाः! अभिवादये ।

**सर्वाः**—(क) जाद! चिरं जीव ।

**लक्ष्मणः**— अनुगृहीतोऽस्मि ।

**सीता**—(ख) अय्या! वन्दामि ।

**सर्वाः**—(ग) वच्छे! चिरमङ्गळा होहि ।

**सीता**—(घ) अणुग्गाहिदह्मि ।

**भरतः**— आर्य! अभिवादये भरतोऽहमस्मि ।

**रामः**— एह्येहि वत्स! इक्ष्वाकुकुमार! स्वस्ति, आयुष्मान् भव ।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥ ७ ॥

**भरतः**— अनुगृहीतोऽस्मि । आर्ये! अभिवादये[1] भरतोऽहमस्मि ।

---

(क) जात! चिरं जीव ।
(ख) आर्याः! वन्दे ।
(ग) वत्से! चिरमङ्गला भव ।
(घ) अनुगृहीतास्मि ।

---

१. 'ये ।' क. ग. घ. पाठः.

**सीता** — (क) अय्यउत्तेण चिरसञ्चारी होहि ।

**भरतः** — अनुगृहीतोऽस्मि । आर्ये! अभिवादये ।

**लक्ष्मणः** — ऐह्येहि[1] वत्स[2]! दीर्घायुर्भव । परिष्वजस्व गाढम् । (आलिङ्गति)

**भरत[3]ः** — अनुगृहीतोऽस्मि । आर्य! प्रतिगृह्यतां राज्यभारः ।

**रामः** — वत्स! [4]कथमिव ।

**कैकेयी** — (ख) जाद ! चिराहिळसिदो खु एसो मणोरहो ।

(ततः प्रविशति शत्रुघ्नः)

**शत्रुघ्नः** —

विविधैर्व्यसनैः क्लिष्टमक्लिष्टगुणतेजसम् ।
द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम् ॥ ८ ॥

(उप[5]गम्य) आर्य! शत्रुघ्नोऽहमभिवादये ।

---

(क) आर्यपुत्रेण चिरसञ्चारी भव ।

(ख) जात ! चिराभिलषितः खल्वेष मनोरथः ।

---

१. 'आयुष्मान् भव । भ' ग. पाठः. २. 'त्स ! इक्ष्वाकुकुमार ! स्वस्त्यायुष्मान् भव । भ' क. पाठः. ३. 'तः — आ' ख. घ. पाठः. ४. 'किमिदम् ।' घ. पाठः. ५. 'पेत्य)' ग. पाठः.

**रामः** — एह्येहि वत्स! स्वस्ति, आयुष्मान् भव ।

**शत्रुघ्नः** — अनुगृहीतोऽस्मि । आर्ये! अभिवादये ।

**सीता** — (क) वच्छ! चिरं जीव ।

**शत्रुघ्नः** — अनुगृहीतोऽस्मि । आर्य! अभिवादये ।

**लक्ष्मणः** — स्वस्ति[1], आयुष्मान् भव ।

**शत्रुघ्नः**[2] — अनुगृहीतोऽस्मि । आर्य! एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः ।

तीर्थोदकेन मुनिभिः स्वयमाहृतेन
नानानदीनदगतेन तव प्रसादात्[3] ।
इच्छन्ति ते मुनिगणाः प्रथमाभिषिक्तं
द्रष्टुं मुखं सलिलसिक्तमिवारविन्दम् ॥ ९ ॥

**कैकेयी** — (ख) गच्छ जाद! अभिळसेहि अभिसेअं ।

**रामः** — यदाज्ञापयत्यम्बा । (निष्क्रान्तः[4])

---

(ख) वत्स! चिरं जीव ।

(क) गच्छ जात! अभिलषाभिषेकम् ।

---

१. 'वत्स! आ' ग. पाठः. २. 'घ्नः— आ' क. ख. ग. पाठः. ३. 'भावात्' ख. घ. पाठः. ४. 'न्ता' घ. पाठः.

(नेपथ्ये)

जयतु भवान् । जयतु स्वामी । जयतु महाराजः । जयतु[1] देवः । जयतु भद्रमुखः । जयत्वार्यः[2]। जयतु रावणान्तकः ।

**कैकेयी —** (क) एदे पुरोहिदा कञ्चुइणो[3] पुत्तअस्स मे विजअघोसं वड्ढअन्तो आसीहि पूजअन्ति[4] ।

**सुमित्रा —** (ख) पइदीओ परिचारआ सज्जणा अ पुत्तअस्स मे विजअं वड्ढअन्ति ।

(नेपथ्ये)

भो भो जनस्थानवासिनस्तपस्विनः! शृण्वन्तु शृण्वन्तु भवन्तः ।

हत्वा रिपुप्रभवमप्रतिमं तमौघं*
सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः ।
सीतामवाप्य सकलाशुभवर्जनीयां
रामो महीं जयति सर्वजनाभिरामः[5] ॥ १० ॥

---

(क) एते पुरोहिताः कञ्चुकिनः पुत्रकस्य मे विजयघोषं वर्धयन्त आशीर्भिः पूजयन्ति ।

(ख) प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य मे विजयं वर्धयन्ति ।

---

१. 'तु रा' ग. पाठः. २. 'र्यपुत्रः । ज' ख. पाठः. ३. 'णो पकिदीओ सद्धादा मे पुत्तअस्स विजअं व' घ., 'णो पइदीओ सज्जदा मे पुत्तअस्स विजअं व' ख. पाठः. ४. 'न्ति । ने' क. ग. पाठः. ५. 'मः ॥ त' ग. पाठः.

---

* पचाद्यजन्तः पुल्लिङ्गोऽत्र तमशब्दो ज्ञेयः ।

**कैकेयी**— (क) अम्महे, पुत्तस्स मे विजअघोसणा वड्ढइ ।

(ततः प्रविशति कृताभिषेको राम[1]: सपरिवारः)

**राम[2]:**— (विलोक्याकाशे) भोस्तात!

स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यं
कर्म त्वयाभिलषितं मयि यत् तदेतत् ।
राजा किलास्मि भुवि सत्कृतभारवाही
धर्मेण लोकपरिरक्षणमभ्युपेतम् ॥ ११ ॥

**भरतः**—

अधिगतनृपशब्दं धार्यमाणातपत्रं
विकसितकृतमौलिं तीर्थतोयाभिषिक्तम् ।
गुरुमधिगतलीलं वन्द्यमानं जनौघै-
र्नवशशिनमिवार्यं पश्यतो मे न तृप्तिः ॥ १२ ॥

**शत्रुघ्नः**—

एतदार्याभिषेकेण कुलं मे नष्टकल्मषम् ।
पुनः प्रकाशतां याति सोमस्येवोदये जगत् ॥ १३ ॥

**रामः**— वत्स लक्ष्मण! अधिगतराज्योऽहमस्मि ।

---

(क) अम्महे, पुत्रस्य मे विजयघोषणा वर्धते ।

---

१. 'मः सीतया सह । रा' ग., 'मः ) रा' क. पाठः. २. 'मः — भो' क. घ., 'मः (ऊर्ध्वमवलोक्य) भो' ग. पाठः.

लक्ष्मणः — दिष्ट्या भवान् वर्धते ।

(प्रविश्य)

काञ्चुकीयः — जयतु महाराजः । एष खलु तत्रभवान् विभीषणो[1] विज्ञापयति, सुग्रीवनीलमैन्दजाम्बवद्धनूमत्प्रमुखा[2]श्चानुगच्छन्तो विज्ञापयन्ति — दिष्ट्या भवान् वर्धत इति ।

रामः — सहायानां प्रसादाद् वर्धत इति कथ्यताम् ।

काञ्चुकीयः — यदाज्ञापयति महाराजः ।

कैकेयी — (क) धण्णा[3] खु ह्मि । इदं अब्भुदअं अओज्झाअं पेक्खिदुं इच्छामि ।

रामः — द्रक्ष्यति भवती । (विलोक्य[4]) अये[5] प्रभाभिर्वनमिदमखिलं सूर्यवत्[6] प्रतिभाति[7] । (विभाव्य) आ ज्ञातम्[8] । सम्प्राप्तं पुष्पकं दिवि रावणस्य विमानम्[9] । कृतसमयमिदं स्मृतमात्रमुपगच्छतीति[10] । तत् सर्वैरारुह्यतां[11] रथः[12] ।

(सर्वे आरोहन्ति[13])

(क) धन्या खल्वस्मि । इममभ्युदयमयोध्यायां प्रेक्षितुमिच्छामि ।

१. 'णः सु' ग पाठः. २. 'मदादयश्च भवन्त वि' ग. पाठः. ३. 'ण्णा कदा खु अब्भुदअं णिवेदिअ अओज्झं पेक्खामि' ख. पाठः. ४. 'क्य) किमेतत् प्र' क. ख. पाठः. ५. 'ये ज्वलित इव प्रभयायं देशः । आ' घ. पाठः. ६. 'र्य इव । (वि' ख. पाठः. ७. 'ति । आ' ग. पाठः. ८. 'तम् । एतत् प्राप्त' क., 'तम् । पुष्पकमिदं विमा' ख. पाठः. ९. 'नम् । तत्' क., 'नं स्मृ' ग. पाठः. १०. 'तिष्ठती' ग. पाठः., 'तिष्ठति' घ. पाठः. ११. 'ताम् । (स' ग. घ. पाठः. १२. 'थः । अ' घ. पाठः. १३. 'ह्यन्ति' ख. पाठः.

**रामः**—

अद्यैव यास्यामि पुरीमयोध्यां
सम्बन्धिमित्रैरनुगम्यमानः ।

**लक्ष्मणः**—

अद्यैव पश्यन्तु च नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥ १४ ॥

(भरतवाक्यम्)

यथा रामश्च जानक्या बन्धुभिश्च समागतः[1] ।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥१५॥

(निष्क्रान्ताः सर्वे)

सप्तमोऽङ्कः ।

---

प्रतिमानाटकं समाप्तम् ॥

1. 'तृ' ग. पाठः.

# APPENDIX I.

## भासरूपकगतानामार्षप्रयोगाणां सूचिका

| प्रयोगाः. | शास्त्राननुरोधप्रकाराः. |
|---|---|
| १. स्वस्ति भवते सपत्नीकाय (अवि० पृ० १०८) | 'प्रकृत्याशिषि' (६. ३. ८३) इति प्रकृतिभावविधिविरुद्धः सभावः सहशब्दस्य सपत्नीकायेत्यत्र कृतः। |
| २. काशिराज्ञे (अवि० पृ० ११०) | अत्र 'राजाहस्सखिभ्यः–' (५. ४. ९१) इति समासान्तप्रत्ययो न कृतः। तदनित्यत्वाश्रयणेऽप्येवञ्जातीयं प्रयोगं न पाणिनीयशिष्टा जातु प्रयुञ्जते। |
| ३. सर्वराज्ञः (दूतवा० पृ० ३२) | पूर्ववत्। |
| ४. व्यूढोराः (मध्य० पृ० १२) | 'उरःप्रभृतिभ्यः कप्' (५. ४. १५१) इति नित्यमिह कपा भाव्यम्। |
| ५. रुदन्तीम् (दूतवा० पृ० ३३) | इह नुम् अशास्त्रीयः। |
| ६. गृह्य (दूतघ० पृ० ५९) | अत्रासमासे 'गृह्य' इति ल्यप्करणं शास्त्रविरुद्धं, 'समासेऽनञ्पूर्वे–' (७. १. ३७) इति समास एव तद्विधानात्। |
| ७. मा दाणि भवं अणत्थं चिन्तिअ (स्वप्न० पृ० ६०)<br>८. मा मा भूयो अवइणिअ (स्वप्न० पृ० ३२) | इह माशब्दयोगे क्त्वाप्रत्ययः प्रयुक्तोऽशास्त्रीयः। 'अलंखल्वोः–' (३. ४. १८) इत्यत्र तु न पर्यायग्रहणम्। |

Pr.

| प्रयोगाः. | शास्त्राननुरोधप्रकाराः. |
|---|---|
| ९. मा णिब्बन्धिअ (अवि० पृ० ३७)<br>१०. अय्ये मा दाणिं अण्णं चिन्तिअ (स्वप्न० पृ० २५) | इह माशब्दयोगे क्त्वाप्रत्ययः प्रयुक्तोऽशास्त्रीयः। 'अलंखल्वोः—' (३.४.१८) इत्यत्र तु न पर्यायग्रहणम्। |
| ११. मा दाणि भवं अत्ताणं ओहसिअं कादुं (स्वप्न० पृ० ५९)<br>१२. माखु माखु षाहषं कळिअ पविषिदुं (बाल० पृ० ६०)<br>१३. माखु माखु भट्टा! एदं जळासअं पविसिदुं (बाल० पृ० ४८)<br>१४. माखु माखु मं शविदुं (प्रतिज्ञा० पृ० ४६)<br>१५. मा दाणि भट्टा! अदिमत्तं सन्तप्पिदुं (स्वप्न० पृ० ६९) | प्रतिषेधार्थोऽत्र माशब्दः। तद्योगे तुमुन् न विहितः। |
| १६. जपापुष्पमिव रक्तलोचनः (प्रतिज्ञा० पृ० ९६) | अत्र रक्तशब्दस्य सापेक्षत्वेऽपि समासः कृतोऽशास्त्रीयः। |
| १७. आपृच्छामि (स्वप्न० पृ० १५)<br>१८. आपृच्छ (प्रतिमा० पृ० ८१) | इह 'आङि नुप्रच्छ्योः' (वा० १.३.२१) इति आत्मनेपदेनैव भाव्यम्। प्रयुक्तं चान्यत्र तद् 'आपृच्छे' (प्रतिमा० पृ० ४९) इति। |

| | | |
|---|---|---|
| १९. छिद्यते<br>२०. रुह्यते | (स्वप्न० पृ० ६९) | अत्र यगात्मनेपदे कर्तरि चिन्त्ये। कर्मणि चेद् रुह्यत इत्यत्र तदसम्भवः, रुहर-कर्मकत्वात्। |
| २१. अश्यते, (वर्धते वा) | (प्रतिज्ञा० पृ० ३) | अत्रात्मनेपदं चिन्त्यम्। कर्माभावान्न कर्मवद्भावोऽपि। |
| २२. द्रक्ष्यते<br>२३. श्रोप्यते | (प्रतिज्ञा० पृ० १६) | अत्र कर्तरि यगात्मनेपदे चिन्त्ये। |
| २४. गमिष्ये | (बाल० पृ० ६७) | कर्तर्यात्मनेपदमिहापाणिनीयम्। कर्मवद्भावोऽपि दुरुपपादः। |
| २५. स्त्रीगतां पृच्छसे कथाम् | (पञ्च० पृ० ३८) | इहात्मनेपदमवैधम्। |
| २६. पृच्छसे | (प्रतिमा० पृ० ४८) | पूर्ववत्। पृच्छसीति वा पाठः कल्प्यः। |
| २७. रुष्यते | (पञ्च० पृ० ३७) | इहाप्यात्मनेपदं चिन्त्यम्। |
| २८. श्लिष्यते | (स्वप्न० पृ० ४) | श्लिष्यतीति परस्मैपदं न्याय्यम्। भावे लटि तु कर्तृवाचकं तृतीयातनन्वेय्यम्। |
| २९. वीजन्ति | (अभिषे० पृ० २६) | अत्रावैधो णिज्लोपः कृतः। |
| ३०. वीजन्तः | (अभिषे० पृ० २६) | |
| ३१. समाश्वासितुम् | (अभिषे० पृ० ६८) | |
| ३२. उन्नामय | (प्रतिमा० पृ० ६६., ११०) | अत्र 'मितां ह्रस्वः' (६. ४. ९२) इति ह्रस्वत्वं न कृतम्। घञन्तात् 'तत् करोती'ति णिचा वा समाधेयम्। |
| ३३. मे शापितः | (प्रतिमा० पृ० ६९) | अत्र पादादौ युष्मच्छब्दस्य 'मे' आदेशो न विहितः। निपातत्वाश्रयणं त्वगत्या कल्प्यते। |

| प्रयोगाः. | | शास्त्रानुरोधप्रकाराः. |
|---|---|---|
| ३४. उत्कण्ठिष्यति | (स्वप्न० पृ० १६) | अत्रानुदात्तेत्त्वादात्मनेपदं न्याय्यम् । तदनित्यतापि क्वचित्क्वचिदाश्रयितुं युक्ता, न बहुत्र । |
| ३५. परिष्वजति | (अवि० पृ० ४९) | |
| ३६. परिष्वज | (अवि० पृ० ९४) | अत्रानुदात्तेत्त्वादात्मनेपदं न्याय्यम् । तदनित्यतापि क्वचित्क्वचिदाश्रयितुं युक्ता, न बहुत्र । |
| ३७. परिष्वजामि | (बाल० पृ० २५) | |
| ३८. उपलप्स्यति | (दूतघ० पृ० ५४) | |
| ३९. प्रत्यायति | (अभिषे० पृ० २४) | प्रत्येतीत्यर्थे प्रत्याङ्पूर्वोऽयतिरप्रसिद्ध इह प्रयुक्तः । अयतेरात्मनेपदं च न कृतम् । |
| ४०. विगाह्य उल्काम् | (बाल० पृ० २२) | इह विसन्धिता दृश्यते । नित्या च श्लोकार्धे संहिता । |
| ४१. ब्रह्मा ते हृदयम् | (अभिषे० पृ० ७३) | शार्दूलविक्रीडिते प्रथमपादान्ते लघोर्गुरुत्वमाश्रितम् । एवञ्जातीयकमनेकमस्ति रूपकान्तरेऽपि । |
| ४२. अवन्त्याधिपतेः | (स्वप्न० पृ० ५४) | अवन्त्या आधिपतिरित्यधिपातिशब्दे आङः संश्लेषणमपूर्वम् । |
| ४३. यद्येवं नलागिरिग्रहणार्थं विमुक्तश्चेत् | (प्रतिज्ञा० पृ० ७०) | यदिशब्द—चेच्छब्दयोः सहप्रयोगोऽपूर्व एषः । |
| ४४. इष्टं चेदेकचित्तानां यद्यग्निः | (अवि० पृ० ६०) | पूर्ववत् । |
| ४५. यदि दातव्ये | (पञ्च० पृ० १४) | अत्र यदिशब्दस्य सत्सप्तम्याश्च सहप्रयोगोऽपूर्वः । |

# APPENDIX II.

## श्लोकानुक्रमणी ।

## APPENDIX III.

## (माड्डानं) नीलकण्ठचाक्यारसकाशादधिगते चतुर्थाङ्कादिसप्तमाङ्कावधिके जीर्णतालपत्रात्मके नवादर्शे दृष्टाः पाठभेदाः ।

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ५७ | २ | ततः प्रविशतश्चेट्यौ | ततः प्रविशति नन्दिनिका प्रतिहारी च |
| ,, | ३ | विजया — ह | प्रतिहारी — ह |
| ,, | ,, | भणेहि भणेहि । अ | भणेहि । अ |
| ,, | ९ | विजया — भ | प्रतिहारी — भ |
| ५८ | २ | विजया — अहो अच्चा | प्रतिहारी — अच्चा |
| ,, | ८ | विजया — (स | प्रतिहारी — (स |
| ,, | ,, | हं एवं गदो | हं गदो |
| ,, | ,, | णन्दिणिए ! एहि अह्मे भ | हळा ! एहि भ |
| ६० | ९ | इति । सु | इति ब्रूयाः । सु |
| ,, | ११ | हि उच्यताम् इ | हि इ |
| ६१ | ५ | मः सीतालक्ष्मणाभ्याम्) | मः सीता लक्ष्मणश्च ।) |
| ,, | ६ | र्ण्य सहर्षम्) सौ | र्ण्य लक्ष्मणं विलोक्य) सौ |
| ,, | १६ | क्षरतया चतु | क्षरकरश्चतु |
| ,, | २० | र्यः । (परिक्रामति) भ | र्यः । भ |
| ६२ | १० | (सुमन्त्रं दृष्ट्वा) अये तातः । सुमन्त्रः — अये कुमारौ लक्ष्मणः । भ | सुमन्त्रः — अये कुमारौ लक्ष्मणः । लक्ष्मणः — अये तातसुमन्त्रः । भ |

Pr.

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ६२ | १३ | णः — एह्येहि । आ | णः — आ |
| ,, | ,, | भव । (सुमन्त्रं वीक्ष्य) तात | भव । तात |
| ६३ | २ | णः — ए | णः—(उत्थाप्यालिङ्ग्य) ए |
| ,, | ,, | र! वत्स! स्व | र! स्व |
| ,, | १३ | ढम् । (उपेत्य) ज | ढम् । (प्रविश्य) ज |
| ,, | ,, | र्यः । आर्य! अ | र्यः । अ |
| ६४ | ७ | मः — वत्स! लक्ष्मण! इदमपि तावदात्मा | मः — इदमप्यात्मा |
| ,, | ८ | सि । गच्छ सत्कृत्य शीघ्रं प्र | सि । वत्स! लक्ष्मण! गच्छ सत्कृत्य प्र |
| ,, | १६ | तमवलोक्य) हं त | तं दृष्ट्वा) त |
| ६५ | २ | सादिस्सं । | सदिस्सो । |
| ,, | ३ | न्त्रः — अ | न्त्रः — (विलोक्य) अ |
| ,, | १३ | किं करिष्यसि । सु | किम् । सु |
| ६६ | २ | न्त्रः — अ | न्त्रः — कुमार! अ |
| ,, | ७ | र्षम्) ए | र्षमालिङ्ग्य) ए |
| ,, | १४ | न्त्रः — (उपेत्य) ज | न्त्रः — ज |
| ६७ | १० | तः — आर्य! न | तः — न |
| ,, | ,, | प्ये । अहमेव यास्यामि । (क | प्ये । (क |
| ६८ | ४ | मः — वत्स! कैकेयीमातः! मा मैवम् । पि | मः — कैकेयीमातः! पि |
| ६९ | ७ | वत्स! कै | कै |
| ,, | ९ | त्वद्वाक्य | तद्वाक्य |
| ७० | २ | त्तरमभिहितम् । भ | त्तरा वयम् । भ |
| ,, | ४ | मः — वत्स! कः | मः — कः |
| ,, | ८ | तः — आर्य! श्रु | तः — तात! श्रु |
| ,, | ,, | तम् । तात! श्रुतम् । स | तम् । स |

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ७० | १२ | ददामि । किमहमनु | ददानि । किमनु |
| ७१ | ४ | मः —(स्वगतं) ह | मः — (विचिन्त्य) ह |
| ,, | ७ | अय्यउत्त! णं दीयदि खु पु | णं देदु अय्यउत्तो पु |
| ,, | ९ | मः — तथास्तु । व | मः — व |
| ,, | १० | स्मि । (गृहीत्वा) आ | स्मि । आ |
| ,, | १४ | तः — (आत्मगतम्) ह | तः — ह |
| ७२ | ४ | मः — वत्स! कै | मः — कै |
| ,, | ६ | मिस्सदि कुमारो भरदो । | मिस्सिदि । |
| ,, | ७ | मः — अ | मः — मैथिलि! अ |
| ७३ | ४ | वत् । वत्स! लक्ष्मण! इतस्तावत् । आ | वत् । आ |
| ७४ | ,, | णुट्ठिओ देवस | णुचिट्ठिदो स |
| ७५ | २ | (विमृश्य) ईदृशमेवैतत् । या | या |
| ,, | ३ | मि । तत् | मि । (परिक्रम्य) तत् |
| ,, | ,, | ही । (परिक्रम्यावलोक्य) अ | ही । अ |
| ,, | ४ | भिषिक्तानि | भिषेकानि |
| ,, | १० | ही । भोः! कष्टम् । यो | ही । यो |
| ,, | १५ | (उपेत्य) मै | (उपसृत्य) मै |
| ,, | १६ | ता — हं अय्य | ता — (विलोक्य) अम्मो अय्य |
| ७६ | ५ | स्स विअ अय्य | स्स अय्य |
| ,, | १४ | रः तत् क | रः । क |
| ७७ | ७ | ण वि अय्यउत्तो एदं ता | णावि ता |
| ७८ | ४ | (परिक्रम्याधो विलोक्य) इ | इ |
| ,, | ९ | मः — (विलोक्य) अ | मः — अ |
| ,, | ,, | वान् । भ | वान् । प्रविशतु भगवान् । भ |
| ,, | ,, | दये । रावणः — स्वस्ति । रामः — भ | दये । भ |

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ७९ | ७ | रं न लङ्घ | रं लङ्घ |
| ,, | १० | रावणः — (आत्मगतम्) या | परिव्राजकः — या |
| ,, | ११ | मि । (प्रकाशम्) भोः | मि । रामः — छन्दतः । परिव्राजकः — भोः |
| ८० | २ | म इदानीमेषः । | म एषः । |
| ,, | ११ | गतमन्य | गतोऽस्मि । अन्य |
| ,, | १२ | प्रभाव | प्रभव |
| ८१ | ९ | तमात्रोप | तोप |
| ८२ | ६ | बाणवे | बाहुवे |
| ,, | ८ | मः — (दिशो विलोक्य) अ | मः — अ |
| ८३ | १२ | ता — (आत्मगतम्) अ | ता — अ |
| ,, | ,, | मे एत्थ उ | मे उ |
| ८४ | २ | रावणः — (आत्मगतम्) मा | परिव्राजकः — मा |
| ,, | ५ | मि । (गन्तुमीहते) रा | मि । रा |
| ,, | ६ | पं गृ | पमेव गृ |
| ,, | ८ | णः — किं न जानीषे । यु | णः — यु |
| ८५ | १४ | मन्त्या ? | मिथ्या |
| ८६ | ९ | ता — (सरोषम्) सत्तो सि | ता — सन्तो सि |
| ,, | १२ | शप्तोऽसी | श्रान्तोऽसी |
| ,, | १४ | णः — (सीतां गृहीत्वा) भो | णः — भो |
| ८७ | ३ | मम् । सीता — अय्यउत्त ! परित्ताआहि परित्ताआहि । रावणः — (परिक्रामन् विलोक्य) अये | मम् । अये |
| ८८ | २ | तो वृद्धता | तस्ता |
| ,, | १५ | मः — (ऊर्ध्वमवलोक्य) अ | मः — अ |

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ८९ | २ | मः — एष रावणः । द्वितीयः — एष जटायुः । उभौ — ह | मः — एष जटायुः । द्वितीयः — एष रावणः । ह |
| ,, | १४ | युः, क्व | युः, भोः कष्टम् । क्व |
| ९० | ३ | प! आगम्यताम् । इ | प! इ |
| ,, | ४ | दयिष्यावः | दयावः |
| ९१ | १० | यः — (विलोक्य) अ | यः — अ |
| ९२ | ११ | तः — तेन हि शी | तः — शी |
| ९३ | ४ | री — (सुमन्त्रमुद्दिश्य) एदु एदु अय्यो । एसो | री — एसो |
| ,, | ६ | न्त्रः — (उप | न्त्रः — बाढम् । (उप |
| ,, | ९ | त्रम् । (सुमन्त्रः सचिन्तास्तिष्ठति ।) प्र | त्रम् । प्र |
| ,, | १३ | तः — (स्वगतम्) अ | तः — अ |
| ,, | १४ | यः । (प्रकाशम्) अ | यः । अ |
| ९४ | १५ | तः — तात! क | तः — क |
| ९५ | ३ | शम्) कुमार! न खलु | शम्) न खलु |
| ९६ | ६ | देवीनां चतुश्शालमिदम् | देव्याश्चतुश्शालेयम् |
| ,, | १४ | री—(आत्मगतम्) हं | री — हं |
| ,, | ,, | वे । (प्रकाशम्) भट्टा! त | वे । भट्टिदारअ! त |
| ९७ | २ | च । कैकेयी—विजये! मं पेक्खिदुं भरदो आअदो । प्रतिहारी — भट्टिणि! तह । भट्टि | च । जेदु भट्टिणी । भट्टि |
| ,, | ६ | किळ । कै | किळ कुमारो । कै |
| ,, | ७ | यी — (स्वगतम्) केण खु उ | यी — केण उ |
| ,, | ८ | दो । प्रतिहारी — भट्टिणि! किं पविसदु भट्टिदारओ । कैकेयी — गच्छ | दो । गच्छ |

| पृष्ठं. | पङ्क्तिः. | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ९७ | ११ | री — भट्टिणि ! तह । (परिक्रम्योपसृत्य) जे | री — जं भट्टिणी आणवेदि । (परिक्रम्य) जे |
| ९८ | ३ | री — आम | री — भट्टिदारअ ! आम |
| ,, | ७ | दत्ति । भ | दो । भ |
| ,, | १२ | यी — (आत्मगतम्) हं | यी — हं |
| ,, | ,, | वे । (प्रकाशम्) भ | वे । भ |
| ९९ | १० | र ! श्रूयताम् — पु | र ! पु |
| १०० | ४ | न्त्रः — ततस्तमेवं गतं इ | न्त्रः — तातं इ |
| ,, | १२ | से कथम | से किम |
| १०१ | ३ | स त्ति वत्तुकामाए पय्या | स त्ति मए भणिअं सन्दावपय्या |
| १०२ | ८ | ब्दः । (प्रविश्य) प्रतीहारी — जेदु कुमारो । इ | ब्दः । प्रतीहारी — भट्टिदार........तह । (निष्क्रम्य प्रविश्य) जेदु भट्टिदारओ । इ |
| १०७ | ३ | णं । ण सक्कं तुमं एआइणिं पे | णं । सक्कं तुए एकाइणिं पे |
| ,, | ६ | अज्ज वि अ | अज्ज वि वणं अ |
| ,, | ७ | लि ! अपि जानासि, पूर्वाधिष्ठानमस्माकं जनस्थानमासीत् । | लि ! पश्यास्मत्पूर्वाधिष्ठानं जनस्थानम् । |
| १०८ | ६ | दुं । (भीता वेपते) रा | दुं । रा |
| ,, | ११ | हस्वनधी | हध्वनिधी |
| ,, | १७ | किमेवं भ | किं भ |
| १०९ | १० | क्तममलं | क्तविमलं |
| ११० | ९ | हि वत्स ! इ | हि इ |
| १११ | ४ | स्व गाढम् । | स्व मां गाढम् । |
| ,, | ८ | मः — वत्स ! कथ | मः — कथ |

| पृष्ठं. | पङ्क्तिः | मुद्रितपुस्तकपाठः. | नवादर्शपाठः. |
|---|---|---|---|
| ११२ | २ | मः — एह्येहि वत्स ! | मः — वत्स ! |
| ,, | ४ | ता — वच्छ ! चि | ता — चि |
| ,, | १० | दीनदृग | दीजलग |
| ११३ | १३ | शौर्य | वीर्य |
| ,, | १५ | जयति | जयतु |
| ११४ | २ | र्या — अम्महे पुत्तस्स | यी — पुत्तअस्स |
| ,, | ,, | घोसणा व | घोसं व |
| ११५ | ,, | ते । (प्रविश्य) का | तें । का |

---

# APPENDIX IV.

## *Some characters mentioned in the Svapnanâtaka and the Pratijnânâtika.*

Two kings Udayana and Pradyota are mentioned in the Pratijnânâtikâ, while in the Svapnavâsavadatta one more king **Darsaka** is also mentioned.

(1) Here, UDAYANA, says Bhâsa, is a descendant of Bharata, ruler of Kausâmbi and son of Satânîka. These accounts also agree §with Udayana of the Vishnu Purâna (Amsa 4, Chap. 21), which describes him as the 24th descendant of Parîkshit, (the grandson of Arjuna): we may conclude from this that Udayana mentioned by Bhâsa and in the Vishnu Purâna are one and the same person.

(2) PRADYOTA, according to Bhâsa. is Udayana's father-in-law and father of Gopâlaka and Palaka; in the Vishnu (Amsa 4. Chap. 23) and Vâyu (Chap. 99) Purânas, he is mentioned as the father of Pâlaka: hence we take that Pradyota mentioned by Bhâsa is the same as the one mentioned in the Purânas. Further the Purânas say that Pradyota is a successor of Ripunjaya *alias* Arinjaya and that the latter is the 22nd descendant from Sahadeva whose father Jarásandha, the ruler of Magadhas, was a contemporary of Arjuna, the celebrated hero of the Mahâbhârata. It is therefore quite possible that Pradyota, the 23rd successor from Sahadeva should be so old as to be in the relation of a father-in-law of Udayana, the latter being the 24th descendant from Parîkshit who is younger than Sahadeva by one generation. Although Ripunjaya, from whom Pradyota wrested the kingdom after defeating him, was a lineal descendant of Sahadeva of Magadhas, yet his kingdom might probably be the country of Avanti with its capital Ujjaine, just as the kingdom of Udayana, a descendant of the Pândavas who ruled over Kuru-Hastinapura, was Vatsas and its capital Kausâmbi.

(3) DARSAKA, as Bhâsa tells us, was the brother of Padmâvatî, the Queen of Udayana and he (Darsaka) ruled over the Kingdom

§ Udayana's grandfather, according to Vishnu Purâna, is Brihadratha, but Bhâsa perhaps calls him by another name, Sahasrânika which he might have learned from some other *Itihâsa*.

of Magadhas with capital Râjagriha. While in the Vâyu Purâna, Darsaka is mentioned as the grandfather of Nandi-Vardhana of the Sisunaga dynasty and the Vishnu Purâna mentions him as Dar*bh*aka, (perhaps in a corrupted form or from clerical error). But Darsaka of the Purânas is not the same as the Darsaka of Bhâsa, for Bhâsa makes him a contemporary of Pradyota, while Darsaka of the Purânas is the 12th successor of Pradyota and son of Bimbisâra (according to Vâyu) who is a contemporary of Gautama Buddha.

---

## स्वप्ननाटकप्रतिज्ञानाटिकयोर्व्यवहृता राजानः ।

---

प्रतिज्ञानाटिकायाम् **उदयनः प्रद्योत** इति च द्वौ राजानौ कथितौ, स्वप्नवासवदत्ते **दर्शक** इति तृतीयोऽपि राजा । तत्र

१. **उदयनः**— अयं भारतवंश्यः **शतानीकस्य** पुत्रः कौशाम्ब्याः पतिश्च **भासेन** वर्णितः । **अर्जुनपौत्रात् परीक्षितः** प्रभृति चतुर्विंशः पुरुष **उदयनो** नाम विष्णुपुराणे (अं० ४. अध्या० २१) कथ्यमान* ईदृश एवेत्यतः स एवायमिति निश्चीयते ।

२. **प्रद्योतः**— अयम् **उदयनस्य** श्वशुरः । एनं भासो **गोपालकस्य पालकस्य** च पितेत्याह (स्वप्न० अ० ६)। तेन विष्णुपुराणे (अं० ४. अध्या० २३), वायुपुराणे (अध्या० ९९) च **पालकस्य** पितेति यः **प्रद्योत** आख्यायते, सोऽस्मात् **प्रद्योतादनतिरिक्त** इत्यवसातुं शक्यम् । किञ्च, **अर्जुनसमकालिकमागधजरासन्धसूनोः सहदेवाद्** द्वाविंशः पुरुषो यो **रिपुञ्जयो** (अथवा अरिञ्जयो) नाम, तस्मादव्यवहितोत्तरः— अर्थात् **सहदेवात्** त्रयोविंशः पुरुषः— इति **प्रद्योतो**ऽयं पुराणयोर्निर्दिष्टः । स एष **सहदेवाद्** यवीयांसं **परीक्षितमपेक्ष्य** चतुर्विंशात् पुरुषाद् **उदयनाद्** वृद्धो भवितुमर्हन् **उदयनस्य** श्वशुरः सुष्ठु सम्भाव्यते । **प्रद्योतेन** यं हत्वा राज्यं गृहीतं, तस्य मागध**सहदेववंश्यस्य रिपुञ्जयस्य** राज्यम् **अवन्तिदेश** एव नूनमासीद्, **उज्जयिनी**

* विष्णुपुराणोक्तम उदयनस्य पितामहं बृहद्रथं 'सहस्रानीक' इत्यनेन नामान्तरेण इतिहासान्तराधीतेन नूनं भासो निर्दिष्टवान् ।

च राजधानी, यथा कुरुदेशहास्तिनपुरेश्वरपाण्डववंश्यस्य **उदयनस्य वत्स**-**देशो** राज्यमभवत् **कौशाम्बी** च राजधानी, तद्वत्। तेन **रिपुञ्जयानन्तरस्य प्रद्योतस्य** राजधानी **उज्जयिन्येव** सम्भाव्यते।

३. **दर्शकः** — अयम् **उदयन**पत्न्याः **पद्मावत्या** भ्राता मगधेश्वर इति, **राजगृहम्** अस्य राजधानीति च **स्वप्नवासवदत्तात्** प्रतीयते। अयम् **उदयनप्रद्योतयोः** सहजीवी कश्चिदनतिप्रसिद्धो राजा मगधेषु स्थित इति **भास**-निबन्धप्रामाण्याद् विश्वसनीयं, न त्वयं **विष्णुपुराणे वायुपुराणे** वा निर्दिष्टः। यस्तु **वायौ शैशुनागेषु नन्दिवर्धन**पितामहो **दर्शको** नामाभिहितः, **विष्णौ** च तदेकदेशविकारेण (लिपिदोषेण वा) **दर्भक** इत्युक्तः, स **भासोक्ताद् दर्श**-**काद्** भिन्न एव, यतो **भासोक्तो दर्शकः प्रद्योत**समानकालः, पुराणोक्तस्तु **प्रद्योतात्** परतो द्वादशः पुरुषः, यस्यैतस्य पितरं (वायुपुराणरीत्या) **बिम्बिसारं बुद्ध**सहचरं वदन्ति।

---